श्रीमत्सु सरससरलतरतरलपदबन्धसंधानधुरन्धरेषु विरिञ्चिवल्लभावर्णावलीप्रसूनवाटीमिलिन्दपुरन्दरेषु सूक्तिसुन्दरीस्वयंग्रहालिङ्गनसौभाग्यभाजनेषु कविसहृदयशिखामणिषु सुहृद्वरजानकीवल्लभशास्त्रिवरेण्येषु समुल्लसन्तु स्नेहरसाप्लुतानि शिवैकतानानि नमांसि भूयांसि—

*पुरा कविकुलावलीललितसंसदां मण्डले*
*गता श्रवणगोचरं भवदुदञ्चिता काकली ।*
*तथाऽपि नवमुद्रणप्रकटिताऽनवद्यक्रमा*
*हरिष्यति मनः सतामिति वयं प्रमोदामहे ।।*

*इति विधेयो*

[signature]

ओऽम्

अनामुक्तमुक्तामालिकाया: प्रथममुक्ता

# काकली

रचयिता

श्रीपण्डिरामानुग्रहशर्म्मसूनुः
बालकविः

श्रीजानकीवल्लभललितललामशास्त्री
साहित्याचार्यस्साहित्यरत्नम्

**प्रकाशकः** : निरालानिकेतनम्
मोदफलपुरम् (मुजफ्फरपुर)
विहारः (बिहार)
फोन नं. : २४६४६६

**प्रथमसंस्करणम्** : साहित्यनिकुञ्जम्, मैंगरा,
(गया)
सम्वत् १९९१, सन् १९३५

**द्वितीयसंस्करणम्** : निरालानिकेतनम्
मोदफलपुरम्

**मूल्यम्** : ३५/-00

**मुद्रक** : सरिता कम्प्यूटर्स,
औरंगाबाद, वाराणसी।
फोन नं. : (०५४२-३५९५२१)

# काकली



बालकविः

श्रीजानकीवल्लभललितललामशास्त्री

# समर्पणम्

अम्ब!

प्रतिबिम्बमपि न दर्शयसि! बाल्ये लाल्यमुपेक्ष्य मां क्व नु गताऽसि?

किमपराद्धं मयाऽपराद्धं वा क्षमस्व तदा— 'कुपुत्रो जायेत क्वचिदपि कुमाता न भवति।'

हन्त! रुदन्तं विहाय शिशुं माम्प्रस्थितायान्दिवि त्वयि तातेनाहन्त्वन्निर्विशेषं पोषितस्सुष्ठु, परपुष्टोऽस्मि, अतश्शृणु, कामपि काकलीमविकलां, श्रुतिसुखदान्दूरादेव मातर्नातः परं किञ्चित् ।

यद्यपि 'पक्षपातं' विहाय प्रसरति सेयम्, परम्पश्य 'कुहू' ध्वनेः प्रभावमम्ब! शुक्लपक्षेऽपि कृष्णपक्षो जायते चित्रममित्रमुखमृगाङ्कमण्डले!

विदग्धविहङ्गमा अपि केनापि न शिक्षितां शिशोर्मे सदोषाम्भणितिं कथमाकर्णयिष्यन्ति सगन्धाः !

किन्तु त्वम् .... .... ?

त्वन्तु श्रोष्यस्येव! परपुष्टस्यापि स्वशिशोः निर्वचन-परीक्षाऽक्षमपि व्याहृतिमाकर्ण्य का नाम न जननी लोकोत्तरानन्दमनुविन्दति लोकोत्तरे !

तुभ्यं सेयं 'काकली' परम्परमाऽतर्मातः !

वसन्त पञ्चमी
सं०१९९१

अनुपमानन्दनो–
जानकीवल्लभः





# तातम्प्रति

तात! कथं कथयेयं साम्प्रतमस्ति न मे हृदये ह्रीः
पुरश्श्रीमतो यतोऽर्पितेयम्मयाऽविकच-शिशुता-श्रीः ।

× × ×

देव ! सेवया समधिगतं यद् वागर्थाभिज्ञानम्
तत्फलस्वरूपम्मे प्रसृतं हरिति काकलीगानम् ।
तत्त्वमस्ति किञ्चिन्न पदानां क्रीडनमेतत्, कृपया-
श्रोतव्यन्तु तथाप्यगायि यत्प्रथमं बालेन मया ।

चरणरेणुरयम्
**जानकीवल्लभः**



# कविपरिचयः

यस्याम्बाऽ'नुपमा' तातःश्रीरामानुग्रहस्सुधीः ।
जानकीवल्लभस्सोऽयं कविर्विजयतेतराम् ।।

एवं विदाङ्कुर्वन्तु भवन्तो यद्यापि 'सुरभारत्या' जीवनस्य, अनल्पतपसां निर्लोभानां विद्याविनयैकविभवानां, सततश्रुतिश्रवणेन सन्तापितभवप्रभवपञ्चक्लेशानां विषयरत्यभावेऽपि शास्त्रविषयरतीनां, परिग्रहाग्रहेऽपि धर्मैकपरिग्रहाणां, परप्रहाणेच्छयाऽगृहीतशस्त्रेऽपि सरस्वतीसंरक्षणार्थं सम्भालितशास्त्रशस्त्राणां गीर्वाणवाणीपादपद्मपरिचर्य्यापरायणानान्द्विजन्मनामहरहस्तत्समाराधनमेव निदानम्। किन्तु विज्ञानराशिनाशितान्धकारेऽपि कालेऽस्मिन्न दृश्यते प्रभा क्वचित्संस्कृतवाङ्मयस्य। हन्त! यतन्तां के पुनस्तदभ्युन्नतये साधनमन्तरा? यदि कश्चिदुपासकस्तदगौरवार्थमुद्युङ्क्ते तत्समुन्नतये च, न हि तदा तत्साहाय्यमाचरति कोऽपि। परिभवादिना रोद्धुञ्च वाञ्छन्ति बहवः किन्तु। तर्हि सुरसरस्वतीजीवनं किन्नु भवेन्नामोन्नतम्? किन्त्वेतत्क्षणेऽपि ये तत्सेवकास्स्वकर्त्तव्ये संलग्नास्ते साधुवादार्हा एव। तादृशस्पृहणीयचरितगणनाक्रमे 'काकली' प्रणेतार इमे श्रीपण्डितजानकीवल्लभललितललामशास्त्रिमहोदया न द्वितीयं क्रममधिगच्छन्ति। इदानीं स्वल्पे (ऊनविंशे) वयसि विद्यमानानामेषां एतादृशकाव्यकलाकौशलं समुल्लासयत्येव सहृदयानां हृदयम्। इत्येषाम्परिचयपरिदानार्थं स्वान्तं स्वत एवाकृष्टं भवति। अस्ति विहारप्रान्तान्तर्गतो गयामण्डलमध्यस्थो मैगरानामधेयो ग्राम एकः। तत्रानेकशास्त्रनिष्ठाधिष्ठाने लब्धप्रतिष्ठाः सद्वृत्ताः स्वधर्म्मानुष्ठानैकचित्तस्थानाः, संस्कृतसाहित्यशिक्षादीक्षाऽर्जितगुरुगौरवाः श्रीपण्डितरामानुग्रहशर्म्माणो निवसन्ति। तेषामेवैते काकलीकोकिलाः कविमहोदया नन्दनतां भजन्ते। यदेमे पञ्चवर्षीया आसन्, तदैवैतेषां जननी श्रीमत्यनुपमा देवी दिवं गता। तदनु पितृचरणैरेवैतेषां लालनम्पालनञ्चाभवत् । तस्मिन्नेव वर्षे कृत एषां विद्यारम्भसंस्कारस्तातपादैः। एभिर्नववर्षावस्थापर्यन्तं हिन्दीभाषाया अध्ययनं विधाय, पितृपार्श्वादेव संस्कृतशिक्षाग्रहणं कृतम्। एकादशवर्षावस्थायाम्प्रथमपरीक्षां

त्रयोदशवर्षावस्थायां मध्यमपरीक्षां, षोडशवर्षावस्थायां शास्त्रिपरीक्षां अष्टादशवर्षावस्थायाञ्च साहित्याचार्य्य-परीक्षां समुत्तीर्णा इमे। तस्मिन्नेव वर्षे 'साहित्यरत्न' परीक्षा (ढाका, बङ्गाल) समुत्तीर्णाः। प्रायस्सर्वपरीक्षायामपि प्रथमश्रेणिरेवाधिगता। आचार्य्यपरीक्षायां विहारोत्कलप्रान्ते सर्वप्रथमतामाप्ता इमे "चन्द्रमौलीश्वर-" स्वर्णपदकं लब्धवन्तः। रत्नपरीक्षायाञ्च सर्व— प्रथमत्वात्स्वर्णपदकम्प्राप्तवन्तः। यथावसरं कविसम्मेलनादौ च बहव× पुरस्काराः प्राप्ताः। इदानीमेते कविमहोदयाः हिन्दूविश्वविद्यालयेऽत्राधीयते, अत्रापीमे प्रथमश्रेण्यामेव भवन्त्युत्तीर्णाः। कवितापठनादिकौशलेऽपि कुशला इमे। एवम् अध्ययनाभ्यन्तर एव काकलीयम्प्रणीता। १९३३-३४ वर्षीयकवितानामत्र विहितस्सङ्ग्रहः। मुद्रणात्प्राक् बहूनि पद्यान्यपसारितानि केनापि कारणेन इदानीन्तन्वङ्गीयं 'काकली' याति भवल्लोचनगोचरताम् । तत्सौष्ठवविषये भारतप्रसिद्धविदुषां सम्मतय एवालम्प्रामाण्यविषयादन्यस्मात्तत एव विरम्यते।

आशासे भगवदनुपमानुकम्पया, सरस्वतीप्रसादेन, गुरुमहोदयानां शुभाशीर्वादैश्चैतेषां सुरभारतीशुश्रूषाव्रतं सदा सर्वथा साफल्यमवाप्स्यतीति तथास्तु।

**श्री हीरावल्लभ शास्त्री**
साहित्यव्याकरणसाङ्ख्ययोगशास्त्राचार्य्यः
साङ्ख्ययोगाध्यापकः प्राच्यविद्याविभागे
हिन्दूविश्वविद्यालयस्य, काशी।

# प्रास्ताविकम्

विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम् ।
प्रवर्त्तते नाकृतपुण्यकर्मणाम् प्रसन्नगम्भीरपदा सरस्वती ।।

– **महाकविर्भारविः**

आभरतादापण्डितराजं काव्यस्वरूपनिरूपणानैपुणीं प्रदर्शितवतां समेषामपि सहृदयानां विचारपर्यवसानमिदमेव यत् यतः सहृदय-हृदयस्य द्रुतिर्भवेत्, तदेव काव्यम्। भवतु नाम प्रकारभेदः शाब्दिको वा भेदः। तत्तु बुद्धिवैभवविलसितमात्रमेवेति प्रतीमः। सा च हृदयद्रुतिकारणता शब्दार्थोभय-निष्ठैवेति न मनागपि संशीतिलेशः पदमाधास्यति सहृदय-हृदय-प्राङ्गणेषु। उक्तमेव केनापि महाकविना—

सा कविता सा वनिता यस्याः श्रवणेन दर्शनेनापि ।
कवि-हृदयं विट-हृदयं सरलं तरलञ्च सत्त्वरं भवति ।।

हृदयतारल्यं काव्याधीनम् । तच्च काव्यं शब्दार्थोभयपर्याप्तम् । यथा काव्ये आर्थिकी चमत्कृतिजनकता समपेक्षिता, तथैव शाब्दश्चमत्कारोऽप्यपेक्षित एव। तथाहि—

'शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते'

हत महाकविमुकुटमणेर्माघस्य सुसङ्गतं सूक्तम् ।

कदाचिदर्थज्ञानमन्तरापि प्रसन्नमधुरा शब्दावली केवलं सहृदयहृदयमुद्वेल्ल-यतीति प्रायः समालोक्यते। तदेवाह गद्यकविताचार्यः सुबन्धुः —

अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला ।।

**–वासवदत्ता**

परं सा शब्दावली सर्वथा सरसा सरला सूपयुक्ता च भवेदिति नितरामावश्यकम्। अस्माकं साहित्ये कवितायां प्रत्यवयवं प्रतिलोम-

सरसत्वमावश्यकमेव समाम्नातम् । यथा प्रबन्धे, परिच्छेदे, पदे, वाक्ये, शब्दे, सन्धौ, वर्णे, वर्णयोजनायां सर्वत्रापि सरसत्वमपेक्ष्यत इति नाविदितचरं काव्यतत्त्वानुशीलनरसिकानाम् । एतदभिप्रेत्यैवाह शृङ्गारकवितागुरुस्तत्रभवान् जयदेवः —

/ 'सरसकोमलकान्तपदावलीम्' इति।

यथा शब्दे तथैव चार्थेऽपि। अत्र विषये गहनतमो विचारसम्मर्दः समालोक्यते प्रखरतरप्रतिभावतां ध्वनिमार्ग-प्रतिष्ठापनपरमाचार्याणामानन्दवर्द्धना-भिनवगुप्त—मम्मटाचार्याणाम् । तदेतत् समासतः प्रतिपादितं ध्वन्यालोके—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ।।

सोऽयं ध्वनिरेव काव्यात्मत्वेनाभिमत उत्तमकाव्यत्वेन समाम्नातः। तदेवं शब्दतश्चार्थतश्च समुत्कृष्टतरैव कविता वस्तुतः काव्यशब्दं भजते इति सर्ववादिसिद्धोऽयमर्थः।

यथा काव्ये शब्दार्थयोर्वैशिष्ट्यमपेक्षितम् तथैव वर्णनीयविषयाणाम् रचनाप्रकारस्यापि च वैशिष्ट्यमपेक्षितमेव। वर्णनीयविषयाणां वैशिष्ट्यं समयानुसारं भवति। यथा यथा समयपरिवर्तनं भवति तथा तथा वर्ण्यविषयाणामपि परिवर्त्तनं भवति। विविध—देशीय-भाषाणां सभ्यतानां संस्कृतीनां सङ्घर्षेण च साहित्ये रचना-प्रकारेऽपि परिवर्त्तनमावश्यकमेव। विश्व-साहित्ये साम्प्रतमेतदेव परिवर्त्तनं प्रत्यक्षमवलोकयामः। परमस्माकं साहित्यन्तु प्रतिक्षणं क्षीयमाणं सङ्कीर्णतामेवोपगच्छति। काव्यं हि नाम परमरमणीयम्, अतिशयपेलवम्, स्वर्गीयञ्च किमपि प्रतिभानैपुण्यम्। सा च रमणीयता—

'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः।'

परमस्माकं संस्कृतकाव्य-जगति प्रतिशतं ९५ काव्यानि शृङ्गाररसवर्णनपराणि, चत्वारि काव्यानि च राज्ञां वीरत्त्ववर्णनपराणि चाटुप्रायाणि, देवतास्तुतिपराणि वा, एकस्मिन्नवशिष्टे काव्ये सर्वेऽप्यनन्तविषयाः वर्ण्यन्ते। अस्माकमियं निर्द्धारणा कदाचित् विवदेत् सहृदयानां संस्कृतसाहित्यसुधा-सरस-मानसानामित्यनुमिनुमः।

अन्यदपि विचारणीयम् विद्यते यत् वस्तुतो वक्रोक्तिरेव काव्यजीवितमिति मतमाविष्कुर्वता भट्टकुन्तकेन वक्रोक्तेर्यत् काव्यजीवितत्त्वमाम्नातम्, तत्सर्वथा स्वाभाविकं हृदयङ्गमञ्च प्रतीयते। वक्रोक्तिशब्देन, नालङ्कारत्वेनाभिमता वक्रोक्तिरस्माकमभिमता; परं तदुक्ति वैचित्र्यमात्रमेव। तदुक्तिवैचित्र्यमन्योक्त्य-लङ्कारे सर्वाङ्गसुन्दरमिव प्रतीयते। अतएव प्राचीनैः काश्मीरदेशीयैर्महाकविभिः सहृदयशिरोमणिना च पण्डितराजेन स्वकाव्येषु तस्या एवं प्राधान्यं संस्थापितम्। पारस्य-अरबी-उर्दू-प्रभृतिभाषाकाव्येष्वप्यन्योक्तीनामेव प्राधान्यमुत्कृष्ट-त्वञ्चावलोक्यते। साम्प्रत हिन्दीप्रभृतिभाषाश्वपि सैव सरणिः प्राचुर्य्येणानुसर्य्यते। परमस्माकं साहित्ये प्रचाराभावादुत्साहाभावाच्च नोत्कृष्टा नवीना काव्यरचनाशैली, अभिनववर्ण्यविषयाणाञ्च समावेशः कुत्रापि दृश्यते। सैव वक्रोक्तिः साम्प्रतं 'छायावाद' नाम्ना प्रसिद्धा वर्तते।

साम्प्रतं जयपुरीयैः सहृदय-धुरन्धरैः श्रीभट्टमथुरानाथशास्त्रिभिः 'संस्कृत-रत्नाकर' — सम्पादकैरभिनवः समुत्साहः प्रदर्शितः। वयमिदानीं सुरसरस्वतीसंजीवनायैतादृशीमेव नवीनतामालोकयितुं व्याकुलाः स्मः।

अकस्मादेव प्रियसुहृदां प्रभूतोत्साहसम्पन्नानां नवयुवकानां श्रीजानकीवल्लभ-शर्म्मणां साहित्याचार्याणामभिनवोत्साहप्रदर्शनसौभाग्यावसरोऽयमपरं प्रमोदस्थानं हृदयस्य।

एतेषां 'काकली' शब्दतश्च, अर्थतश्च, वर्णनीयविषयवैशिष्ट्येन, रचनानैपुण्येन, नावीन्येन च संस्कृत-साहित्य-संसारे कामपि जागरां जनयेत् समाहरेच्च सहृदयहृदयानीति सुदृढोऽस्माकं विश्वासः।

'काकली' — विषये नास्माकमपरं किमपि वक्तव्यम्। अत्र सहृदया एव निकषायन्ते। उक्तमेव कविकुलगुरुणा—

'हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा।'

परमिदमेव वक्तव्यम् यत् काव्यविषये यद्यदावश्यकमुपरिसमुट्टङ्कितमस्मा-भिस्तत् सर्वमेवात्र समवलोकयामो यथायथम्।

अस्य कविकोकिलकुमारस्य श्रवण-मधुरां हृदय-हारिणीं 'काकली' -माकर्ण्य मा समुद्विजन्तु वराकाः काकाः। सहृदयाश्च नवीनतरमेतत् काव्यमाकलय्य

प्रमुदितमानमानसाः कविकुलकुमारस्यास्य - उत्साहं समेधयिष्यन्तितरामिति सम्भावयामः।

साम्प्रतं संस्कृते काव्यसरणिश्छिन्नभिन्नाऽनवीकृता च संलक्ष्यते। पुरातन प्रथाप्रचलितान् वर्ण्यविषयानादायैव केचन कवितां कुर्वन्ति। तेनाभिनवविषयाणां समावेशस्तत्रनोपलभ्यते। परमनेन कविवरेण यत् साहसं कृतं तदतितरां सन्तोषास्पदं हर्षास्पदञ्च। कवेरस्य प्रसन्नमधुराम्, ललित-ललितां रमणीय-कमनीयां शब्दावलीम्, रचना-कौशलं विन्यासवैभवं सर्वमपि प्रौढतरमालोक्य सुदृढं वक्तुं पारयामो यदयं कविः संस्कृत-शब्द-भाण्डागारे तत्तत्काव्यमर्मस्वपि पूर्णमधिकारं प्रावीण्यञ्च स्थापयति, प्रौढिमुपगतो विद्वांश्च। मयाऽस्य कवितां पठता स्वर्गीय आनन्दोऽनुभूतः ।

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद् भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ।।

सुप्रभात-कार्यालयः काशी
मकरसङ्क्रान्तिः,
सम्वत् १९९१

सहृदयानुचरः -
**श्रीकेदारनाथ शर्मा सारस्वतः**

# अनुरणनम्

अयि सुरसरससरस्वतीसमुन्नतये स्पृहयालवः !
औपकर्णिकत्वाय प्रवृत्तेरस्या देवो लवः ।
चित्रायात्र प्रपञ्चे वैरिञ्चे वस्तूनि बहूनि
दृश्यन्ते हृद्यानि, कुरूपाण्यपि रूक्षाणि मृदूनि ।
चित्रमयीयं हरितसस्यवसना भूः किञ्चित्रिता ?
कल्लोलिनीतरङ्गैस्सततं किमियम्पवित्रिता?
नभसि नित्यमुद्गतो नीलिमा सलिले मधु-मधुरिमा;
किमभूद्वसुन्धरायां लघिमा गिरिषु गौरगरिमा?
चित्रकरः कोऽसावेतेषामतिशयसिद्धकरः ?
संस्थाप्यैतानि यथावद् यस्सन्ततमनोहरः !
एतदुद्गमान्वेषणक्षणे समाकुलाः प्राणाः ;
जगतो मेऽप्यहरहो रहो जीवन्तो म्रियमाणाः !
एकान्ते कान्तारे सह हरिणीभिर्हरिणकुलम् ;
बालवल्लरिं, कोमलकिसलयकलितद्रुममतुलम् ।
परिमलमलयसमीरमधीरं क्रीडन्तं लतिकया ;
चञ्चत्पञ्चमलयं कोकिलं सह नतया वनितया ।
कादम्बिनीचुम्बिनीं सौदामनीवनीं गगने ;
मञ्जुलवञ्जुल-गुञ्जन-चञ्चु मिलिन्दवृन्दमयने ।
सान्द्रचन्द्रिकाचारुचन्दिरं, रविकरदलदरविन्दम् ;
प्रचलदलेषु पतन्तं श्रीशीकरमपि मन्दं मन्दम् ।
प्रेक्ष्य प्रत्यहं सुखदुःखे च हृदानुभूयमाने;
लीलोत्कलिकां जाने, म्लाने मनसि दूयमाने
प्रकृतिक्रीडामेवमेव व्रीडामिव कुलललनायाः
श्रेयस्करीं निभाल्य, मे मनस्युत्पन्ना माया ।
तया बलान्नीतः कवि-कर्मणि यत्किञ्चिदकरवम् ,
ज्ञातवानहन्तत्कोकिलकमनीय 'काकली' रवम् ।
नाध्ययनं नान्वभवं तेजस्सारस्वतं नवम् ,

अनवाप्यैव स-भाम्प्रतिभां, कवि-काम्य-कवित्वजवम् ।
अलिखं यत्तज्जानीयां कथमथ कवित्वरचनम् ,
नाम्ना तत्काकलीमहं कृतवानन्तर्वचनम्

× × ×

परिवर्तनशीलं संसारं, प्रेक्ष्य बाल्य-यौवने;
नृपं, मुनिञ्च वर्तमानं सदने च कदापि वने ।
वासन्तीलतिकाङ्कशयं निर्भयं कदापि वसन्तम् ;
ग्रीष्मम्प्रावृषमपि शरदं पुनरपि शिशिरं हेमन्तम् ।
जीर्णतरूणामपि दलानि हरितानि कदाप्यरुणानि;
निभाल्यानुमन्ये प्रकृतेः परिवर्त्तनानि दयितानि ।
तेन हेतुना 'नवरीत्यैव' मया 'काकली' प्रणीता;
प्राच्यरीतिनाशार्थं न मतिर्नवनीतिं नीता ।
उदाहरामि ध्वनींश्च नालङ्कृतीर्निराधाराः ;
वहति नात्र तद् ध्वनिप्रवाहोऽलङ्कृतेश्च धारा।
'छन्दोहीनम्भवति न वा सुन्दरम्पद्यमिति धिया
लिखितेयं 'काकली' मया, नोच्छन्दोभिया, ह्रिया ।
अथवा, नूत्नं वृत्तं वर्त्तत एव मया तद् गीतम् ;
प्रत्नवन्न दृश्यते किन्तु तन्नवबन्धनमुपनीतम् ।
'क्रियमाणो यतिभङ्गस्स्थिरमतिभङ्गं यतेर्वितन्यात् ;
मधुरिम्णेति, तथा कृतो मया कोऽन्यो नु यतिं हन्यात् ।
अज्ञानाज् ज्ञनाद्वा व्याकृतिविरुद्धञ्च यद्गदितम् ;
सन्ततमयि लोके बालानां स्खलितवचस्तद्विदितम् ।
खगवागियमिति धिया केवलं श्रवणीया 'काकली' ;
दोषाकरकौमुदीनिभा मे दुष्टा पदावली ।
प्रथमो मेऽयं श्रमो, भ्रमो वैतादृशकृतिकरणे ।
सुरभारत्यामित्यालोच्यं सुधियाऽत्र विहरणे ।
उत्साहो वर्द्धितो मे शिशोर्गुरुभिर्यैरपि सततम् ;
तेषामग्रे मेऽस्ति मस्तकं सर्वदैव विनतम् ।

साहित्यनिकुञ्जम्
मैगरा (गया)

इति विनिवेदयति
विद्वच्चरणकञ्जचञ्चरीकः
**पण्डित श्रीरामानुग्रहशर्म्म-सूनुरनुपमानन्दनो**
**जानकीवल्लभः**

# काश्चन सम्मतयः

(श्रीमन्माध्वसम्प्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्य्य
तर्करत्नन्यायरत्नगोस्वामि-
श्रीदामोदरशास्त्री )

(१)

वाराणसेयविश्वविद्यालयेऽधीयानस्य ललितललामापराभिधस्य पण्डितश्रीजानकीवल्लभशर्मणो हृदयतन्त्रीतोऽनुरणितां काकलीमाकलय्यानुकलमदसीयकवनकलाकौशलाकलनोत्कर्णतायामुत्कं कर्णकरणं कथमपि कुण्ठामचीकरच्चेतः। न किलाकाण्डकृतोऽयं कलकलो, न चापि कौतस्कुतीमाकाङ्क्षितुमुत्कण्ठते, किन्तु प्रचञ्चूर्य्यमाणप्रतनाप्रतनपारिपाट्यपटिमानमेकपदेऽननुपाल्यापि पद्धत्यन्तरपथिकीभूयापि सर्वपथीनतामजहती प्रकृता काकली नवकलेवरतया कामं नोऽजीहृषत्, सुतरामत्र विवक्षितानाख्यानमननुसूयुतां मा नाम प्रचीकटदिति कियदप्यवश्यं वक्तुं कामयामहे।

आस्थेयमेतन्ननु नवीनैरन्तेवसद्भिः कवयितुमिच्छद्भिर्व्युत्पित्सुभिश्चतुरस्रयद्भिश्च स्वां शेमुषीं यत्र पिष्टपेषणमाचरता फलेग्रहिता शक्यसौलभ्या किन्त्वभिनवसरणिपरिचरणेनैव, नचेदमसम्भवीति बम्भ्रमणीयम्, यद्यपि चतुर्वर्गकलिता एवं वर्णास्तथाऽप्येतैरेव रचनाचतुरिम्णा चतुर्वर्गतत्साक्षात्पारम्परीपरीतसुपरीतविपरीतसंपृक्तपरिस्थितिपरिपचेलिमवर्णविन्यासशैलीमहिम्ना निरवधि वाक्यविधास्सन्ति स्म सन्ति सन्ति च पुरा किमन्यदुच्यताम्? अन्ते च जगदीश्वरात्प्रार्थ्यते तत्कृपयाऽयं काकलीकोविदस्तावदेतद्देशीयां काकलीमाकर्णयतां चिरमौपकर्णिकीकुर्वन् दीर्घायुर्भूयादिति कृतमधिकेनेति शम् ।

वसन्तपञ्चम्यां, वै०सं० १९९१
काश्याम्

महामहोपाध्यायः

**श्रीमन् पण्डितप्रमथनाथतर्क भूषण भट्टाचार्य्यः**
प्रिन्सिपल, दी कॉलेज ऑफ ओरिएन्टल लर्निङ्ग,
हिन्दू यूनिवर्सिटी, बनारस
१५-९-३४

साहित्याचार्य्यस्य श्रीमतो जानकीवल्लभशर्म्मणः 'काकली' नामकं गीतिकाव्यं विलोक्य महान् खलु सन्तोषस्समधिगतो मया। अस्य नवोदितस्य कवेः पदलालित्यं, प्राकृतसौन्दर्य्यवर्णना-पाटवं, रसभावादिप्रकटनकुशलता च, सहृदयानां प्रमोदभरं नितरां जनयिष्यन्तीति मे सुदृढो विश्वासः। अस्य चिरायुषः कवितासेवाव्रतं सर्वथा साफल्यमुपैत्तु, इति श्रीवाग्देवीचरणाम्बुजयोः प्रार्थनं ममेति।

– श्रीप्रमथनाथतर्कभूषणशर्म्मणः

(३)

**श्रीमान् ईश्वरीदत्त दौर्गादत्तिश्शास्त्री**
एम०ए०, एम०ओ०एल०
सुपरिटेण्डेण्ट, संस्कृत एसोसिएशन,
बिहार एण्ड उड़ीसा (पटना)
१-१०-३४

जानकीवल्लभकवेश्शिक्षाद्राक्षार्द्रमाधुरी ।
प्रतिमाऽप्रतिमाया वा प्रतिभायाः प्रतिष्ठिता ।।१।।
तन्मनस्स्तनयित्नोर्वा स्त्यानास्तनितसन्ततिः ।
तत्साधुतासमुद्रेकसुधादीधितिदीधितिः। ।२।।
साहितीसरसीतीर्थस्नानपुण्यपुरस्कृतिः ।
सदादरसदाचारमन्दारमृदुमञ्जरी ।।३।।
सचेतश्चातकव्रातानन्दसन्दोहकन्दली ।
कर्तृकर्मण्यता कीर्त्तेस्सौवर्णी वा पताकिका ।।४।।

कान्ता कान्तिमती काम्या कविकोकिलकाकली।
करोतु "काकली" नित्यं कोविदानां कुतूहलम् ।।५।।

— ईश्वरीदत्त दौर्गादत्तिः
विहारोत्कल संस्कृत-शिक्षाध्यक्षः।

(४)

महामहोपाध्यायाः सर्वतन्त्रस्वतन्त्राः
**पण्डितप्रवराः श्रीमन्तो बालकृष्ण मिश्र महोदयाः**
हेड ऑफ द डिपार्टमेन्ट (वेदान्त),
हिन्दू यूनिवर्सिटी, बनारस।

साहित्याचार्य्य पदवीनवीकृतोत्साहसमेधमानप्रतिभाविभासित श्री ललितललामनामकविकोकिलकृतां काकलीमाकलयन् अमन्दमानन्दमनुविन्दामि। यस्मादिह गीतिकानिशमनसमनन्तरं वालिशानामपि मनः प्रमोदपयोनिधौ निमज्जति, किमुत सत्काव्यानुसन्धानसमासादितरसशालिनाम्? विषयसमुदयोऽपि पदकदम्बकमिव कोमलतया कान्ततां क्वापि स्तोकतोऽपि नातिशेते। स्थालीपुलाकन्यायेन निदर्शयामि यथा— "अये कामये राम ते बाललीलाम्" इति, इह किंविधः शब्दाभिधेययोर्मधुरिमा? इत्यत्र मानसमेव मानतामश्नुते सहृदयानाम्। न चास्मिन् अधमकाव्यत्वसंशयो मनसि मनागपि समुन्मिषति, आलम्बनाभिरामरामरतिरूपभावोहि निर्मातृसमवेताभिप्रायविषयभावं भजते, कविविवक्षितव्यङ्ग्यविधुरीकृतशब्दार्थोभयत्वमेव तदित्यालङ्कारिकाणामनुमतम्। सपदि रत्यादिस्थायिभावोपहितविगलितावरणसच्चिदानन्दाभिव्यञ्जकतया तदावश्यकत्वं विदुषां विदितमेवेति न विफलता निर्माणस्य। पद्यमपि सुन्दरं प्रकृत्यैव दुष्करं भवति, तत्राऽप्युपजीव्यतयाऽन्त्यानुप्रासमाश्रयन्ती गीतिः सापीदृशी; अतएव क्वचन यतिसंघातधीरताविघातकतया वा गत्यन्तरविरहेण वा प्रसज्यमानोऽपि यतिभङ्गो न मे हृदि वेदनामातनोति। किमधिकम् इदमीयकवनयोग्यतां कालोचितामालोच्य सुदृढं विश्वसिमि यदयं साहित्यानुशीलनाहितविशदविवेकेन कविकुलकमनीयकीर्त्ति-कीर्तितः काश्यपीतले न विलम्बेन भविष्यतीति।

२४-८-३४ **श्री बालकृष्णमिश्रः**

**श्री पण्डित महादेवशास्त्री साहित्यशास्त्राचार्यः कवितार्किकचक्रवर्ती**

व्याकरणाचार्य्यः

प्रोफेसर ऑफ लिटरेचर, द कॉलेज ऑफ ओरियेन्टल लर्निङ्ग

बी०एच०यू०

४-१-३५

गोविन्दो गोनविन्दः कविरकविरसौ नीलकण्ठोऽपकण्ठः।
क्षेमो न क्षेमपक्षो गलितमदभरः फल्गुबन्धस्सुबन्धुः।।
सत्काव्योल्लासलीलाकलितकलकले काकलीकोकिलेस्मि-
न्द्राक्षामाधुर्य्यदीक्षाक्षममपि गणये पण्डितम्पण्डमेव।।१।।

**– श्री महादेवशास्त्री**

(६)

**श्रीमान् पण्डित कालीप्रसाद मिश्रो व्याकरणाचार्य्यः**

हेड् ऑफ द डिपार्टमेण्ट ऑफ व्याकरण,
द कॉलेज ऑफ ओरिएण्टल लर्निङ्ग एण्ड
हेड वार्डन ऑफ द फोर्थ होस्टेल, हिन्दू यूनिवर्सिटी, बनारस,

४-९-३४

ललितललामापरनाम्नः श्रीजानकीवल्लभशर्म्मणः प्रथमां कृतिं "काकली" मेतामाकलय्य, अनल्पानन्दवृन्दं वहामि। अभिनववयस्कोऽपि दिव्यां वाचमात्मसात्कृत्य मधुरां गीतिं गायन्नेष कौतुकाक्रान्तं कृतवानस्ति। 'काकल्या' अस्या प्रतिप्रतीकं कविकर्मकौशलं परीक्ष्य पण्डितप्रकाण्डान्यपि विस्मयन्ते।

वयन्तु 'निनादय नवीनामये वाणि वीणाम्' इति पद्यपाठमपि प्रपठ्य प्रकामम्प्रसीदामः। मधुरो मसृणश्चात्र वर्णविन्यासप्रकारः, हृदयङ्गमश्च पदगम्यरसभावाद्यवगमः, मनोरमश्श्रवणसुभगश्च वर्णनिवहः। एतावति गुणसञ्चयेऽपि गीतावत्र प्रौढान् प्रसन्नांश्च वर्णान् यथानियमं विनायासञ्च विन्यस्ताऽनेन कविना अर्थगौरवं मनागपि नोज्झितमिति मन्येऽल्पाल्पैरेव दिनैर्नैजैश्शुभ्रैर्यशोभिः साहितीसुधासुहितान् कविसुधाकरानपि ह्रेपयिष्यति मोदयिष्यति च गुरुजनानित्यध्यवस्यति-

—कालीप्रसादमिश्रो (व्याकरणाध्यापकः)

(७)

**श्री पण्डित विन्ध्येश्वरी प्रसाद शास्त्री**

सूर्य्योदयसुप्रभातयोर्भूतपूर्वसम्पादकः

काकलीनतामहाभयादिव नीरवगीता;
द्विजकुलकलितरसालमञ्जरीस्वादफीता,
स्वरसननिन्दितवेणुविपञ्चीरवमाधुर्य्या;
सुमनोमनोमनोहरसकलरसायनधुर्य्या,
अयिभो 'ललितललाम' मम, बहुहृदयोत्कलिकाकली—
रुद्भावयति सदा सखे !पुंस्कोकिल! तव काकली!

—श्री विन्ध्येश्वरीप्रसादमिश्रः

(८)

Dated the 13th December 1934

It was with great delight and appreciation that I could read the "Kakali" poems composed by Pandit Janaki Vallabha Lalita Lalama Sastri of the college of Oriental Learning, B.H.U.. His instinct of poetic art is really praiseworthy, specially in his student life. With the increase of his knowledge he assures us to be a genuine poet, which is a matter of great pride to us. He possesses a gifted talent and has a natural predilection towards writing poems. His composition is full of melody, rhyme and rhythm. When he will lay a definite plan before him, his art will surely help in realizing his ambitions, and then he is sure to be held in high regard by the votaries of Sanskrit learning, to which, I wish, he may strive to attain in near future.

**Siraram J. Joshi**
M.A.
Sahitya Sastracharya
C.O.L., B.H.U.

(९)

**अम्बिकाप्रसादोपाध्याय:**

व्याकरणाचार्य्य:

प्रोफेसर, ओरिएण्टल कॉलेज, बी०एच०यू०

ललितललामापरनाम्ना श्रीजानकीवल्लभशर्म्मणा स्वकल्पितैर्नूतनैश्छन्दोभि: सङ्कलितं मुक्तकं नामेदमभिनवं काव्यम्पदमाधुर्य्येणार्थगाम्भीर्य्येण रसभावादिप्राचुर्य्येण सहृदयहृदयचमत्कारितया चैकैकेनापि पद्येन चमत्करोति चेतांसि सचेतसाम्, समुत्पादयति च सहृदयानां विदुषां चेतस्यानन्दसन्दोहम्। अस्याभिनवा रचनापद्धति: स्मारयति "नूतनोऽयं छन्दसामवतार" इति भगवतो भवभूतेर्गदयांशम्। अन्ते च भगवन्तं भवानीपतिं भूयोभूयोऽस्य कवेश्चिरायुष्ट्वाय यशोभिवृद्धये चाभ्यर्थये।इति—

२४-१-३५ —अम्बिकाप्रसादोपाध्याय:

(१०)

नारियलवाली गली, लखनऊ

१७-७-३५

साहित्यसम्राट्

**पण्डित श्री सूर्य्यकान्त त्रिपाठी 'निराला'**

प्रिय बाल पिक,

तुम्हारी 'काकली' नकल नहीं। तुम्हारे जातीय सत्य से पूण, आकाश और पृथ्वी को मिला रही है। इसमें मैं अपने तारुण्य की नयी पहचान पाकर चकित हो गया। देर तक मुग्ध होकर सुनता रहा।

मैं अन्यत्र, किसी पत्रिका में, इसकी चर्चा करूँगा।

तुम्हारा

निराला



# मङ्गलम्

जयति दुरितकृतिकदनं मतिततिसदनं विधायि भव्यानाम्;
मञ्जुलकुञ्जरवदनं हृतमदमदनं महन्महः किमपि।

स जयति रतिमिव नगपतितनयां
प्रणयागतां त्यक्त्वा ।
तपसा भृशं कृशान्तां
कान्तां विदधान ईशानः ।।



तावत् कोकिल, ललितां

नवरसवलितां च काकलीं कलय

यावत् प्रावृषि भेको

न वदत्येकोऽपि सम्भ्रान्तः

– **जानकीवल्लभः**

# विषयानुक्रमणिका

●

# भारतीवसन्तगीतिः

निनादय नवीनामये वाणि! वीणाम्।
मृदुं गाय गीतिं ललित-नीति-लीनाम्।।

मधुरमञ्जरीपिञ्जरीभूतमालाः, वसन्ते लसन्तीह सरसा रसालाः;

कलापाः सकलकोकिलाकाकलीनाम्।
निनादय नवीनामये वाणि ! वीणाम्।।

वहति मन्दमन्दं सनीरे समीरे, कलिन्दात्मजायास्सवानीरतीरे;

नतां पङ्क्तिमालोक्य मधुमाधवीनाम्।
निनादय नवीनामये वाणि! वीणाम्।।

चलितपल्लवे पादपे पुष्पपुञ्जे, मलयमारुतोच्चुम्बिते मञ्जुकुञ्जे;

स्वनन्तीन्ततिम्प्रेक्ष्य मलिनामलीनाम्।
निनादय नवीनामये वाणि! वीणाम्।।

लतानां नितान्तं सुमं शान्तिशीलम्, चलेदुच्छलेत्कान्तसलिलं सलीलम्-

तवाकर्ण्य वाणीमदीनां नदीनाम् ।
निनादय नवीनामये वाणि! वीणाम् ।।



वसन्त पञ्चमी

सम्वत् १९९३

# बालवसन्तः

विलसति विपिने बालवसन्तः !

द्रुमा नवैः कोमल-किसलय-निचयैः

शय्यां कृतवन्तः।

करे दत्तवन्तः क्रीडितु

मवलून - प्रसूनसहस्रम्

वादयितुं वाद्यं नियोजिताः

ननु मधुपा गुञ्जन्तः !

चारा इव तत्प्रणिधिसमीरा

स्त्रिविधा वान्ति समन्तात्

बालो मा श्रान्तो भवेद्यथा

व्यजनमिवेति वहन्तः !

मुदमातनुतां गीतमिदं मे

जननी-जनक-गुरूणाम्

शिशुमुल्लासयितुं प्रयतन्ते

यत्र पिकाः कूजन्तः !



सम्वत् १९९३

# स्वप्नो विरसः

वृन्दावने वादिता वंशी।

गता तदानीन्दूरतरमहम्प्रावृषीव सखि! हंसी।

सकलमकलयन्निशि कलहासम् —

मौनि पक्षिपुञ्जं वनवासम्,

राधारमणोऽरचयद्रासम्;

प्राग्यस्यालि ! मालिकेवासम् ।

तत्राभवन्न काचिद्राधा

दर्शितापरा प्रीतिरगाधा

चकिता मृगी-वेक्षितव्याधा —

अहम्, हसन्ती दृष्टा राधा;

क्लान्त-स्वान्ता कान्तारे जाताऽस्मि मानिनीदोषात्

ताडयितुं तामुदक्षिपं चरणं निर्द्वन्द्वं रोषात्

भग्नो हन्त! तदानीं विरसः स्वप्नो विरहाशंसी!

वृन्दावने वादिता वंशी।



६.७.३३

# माया

नामिता मया ते माया मीयते विभो!
नारदादिमुनिभिर्भुवने
सिद्धसिद्धिभिर्घन-गहने
कामिनीं प्रपश्यद्भिर्धीर्हीयते विभो!

कौशिकेन कौशिक-वृत्या
काम्यते तमिस्रा नित्या
मध्ये-समाधि क्रोधो धीयते विभो!
रत्नराजिराजितधनिना
मौलिमणि-मण्डित-फणिना
स्वल्पमपि न वसु दीनेभ्यो दीयते विभो!
वसुधासुधासमधर्म:
श्रेयस्करसात्त्विक-कर्म —
हीयते, गरलमिव पापम्पीयते विभो !
ज्ञानिनोभवन्ति विमुग्धा:
बालिशा: सकृत् किं क्षुब्धा: ?
सुकृतेन कुकृतं लोभाच्चीयते विभो !



७.७.३३

# हर-हारिगानम्

ध्वान्तं हर मे हृदि संक्रान्तम् !
त्वां विहाय विदधाति समरसं
को जीवनमुद्भ्रान्तम् !
तरलतरङ्गां त्रिपथगगङ्गां
वहसि तूत्तमाङ्गेन
क्षालय कायालयकल्मषमयि
कुरु मे स्वान्तं शान्तम् ।
भव, भूतिभिर्विभूषितोऽसि
कुरु मामपि नवभवभूतिम्
काली-दासोऽस्यनुरागात्
कुरु कालिदासमिव कान्तम् ।
यशश्चारु-चन्द्रं मौलौ
धत्से, वत्से कुरु करुणाम्
देहि क्रीड़ितुं तमिव यशो
वाऽनन्तान्ते विश्रान्तम् ।



शिवरात्रि : १९३३

# कौसल्यालापः

अये कामये राम ते बाललीलाम् !
मतिं दुग्धमुग्धां गतिं स्वप्न-शीलाम् ।

विलोके विभो त्वां सशङ्खं सचक्रम्
निरुद्धाऽस्ति वाणी, मुखं भीति-वक्रम्
कुरु स्वाकृतिं लोकदृग्दोषकीलाम् ।
अये कामये राम ते बाल-लीलाम् !

निजाङ्केऽङ्ग कुर्यां कथङ्कारमारात्
भवेत्सम्भ्रमः किं न संसारसारात् ?
श्रियं वैद्युतीं कुरु सजलमेघनीलाम् !
अये कामये राम ते बाल-लीलाम् !



रामनवमी
१९३३

# कादम्बिनी

कादम्बिनी त्वमसि किम् ?

दयितायाा मे नाम वर्त्तते तेऽपि, ततो नु हससि किम् ?
कादम्बिनी त्वमसि किम् ?

चन्द्रो मन्दीकृतस्त्वया, मद्वल्लभया मुखचन्द्रः ;
तारास्त्वयि संलग्ना, मग्ना तस्यान्तदालि 'तारा'।

सह सख्या खे खेलसि किम् ?
कादम्बिनी त्वमसि किम् ?

सजला त्वञ्च सलीलाऽसौ, स्मेरमुखी त्वं, सा सरला ;
श्यामा त्वं, श्यामा रामाऽसौ, त्वत्समैव सा सरसा ।

प्राण-रसं प्रदिशसि किम् ?
कादम्बिनी त्वमसि किम् ?



१९९३

# भ्रमरगानम्

इन्दिन्दिर, निन्दसि मकरन्दम् ?

पीत्वा पूर्व्वमपूर्व्वप्रेमपूर्व्वकमयि ! मन्दं मन्दम् ?
इन्दिन्दिर, निन्दसि मकरन्दम् ?

कलिकेयं या वरवृन्तेन समं हृष्टाऽनुशयाना
दासीकृतनलिनेनेषन्नयनेन जगत स्वच्छन्दम् —
पश्यन्ती, त्वमचूचुरः स्वनन् तस्याः परमानन्दम् ।
इन्दिन्दिर, निन्दसि मकरन्दम् ?

सरसि निविश्य मुखं सुखं चुचुम्बिथ नवरसं चषन् सन्;
सम्मुखमसाम्प्रतं साम्प्रतमपि कृतवानन्वरविन्दम् —
विन्दन्नानन्दम्परात्परं कमपि नवं निष्पन्दम् ।
इन्दिन्दिर, निन्दसि मकरन्दम् ?

असमय उल्लासं विकासमपि समागमान्तेऽवापत् ,
नवापदाऽपि पदन्निहितन्तज्जीवनाङ्कने मन्दम् —
धृत्वा शिरसिपरागरागमयि साऽविन्दन्नानन्दम् ।
इन्दिन्दिर, निन्दसि मकरन्दम् ?



१९३३

# स्नेहगीतम्

स्नेहे को न दहति निजदेहम् ?
सखि, पतन्तमयि, पश्य पतङ्गन्दीपे दीपितदेहम् !
स्नेहे को न दहति निजदेहम् ?

कथं वसन्तागमे विटपिनः पातयन्ति पर्णानि,
दर्शयन्ति किन्ते न दिगन्तं स्वीयवसन्तस्नेहम् !
स्नेहे को न दहति निजदेहम् ?

ज्वलदङ्गारं खादति किं नु विहगचञ्चुरश्चकोरः ;
दीपयत्यसौ किं प्रियसखि ! स्नेहासव-गौरवगेहम?
स्नेहे को न दहति निजदेहम् ?

ललितललामकलितगीतं स्फीतम्मधुमोहनभावम् ;
देहदहनमपि प्रेमपावके वक्ति वीतसन्देहम् ।
स्नेहे को न दहति निजदेहम् ?



१९३३

# विच्छित्तिः स्नेहच्छायायाः

स्नेहे भवति सदैव हि चित्रम् !
पापं मनः कदापि भवति पुनरपि च कदापि पवित्रम् !
स्नेहे भवति सदैव हि चित्रम् ।

दामोदररक्ता ललिता कालिन्दी किं श्यामाऽभूत ?
पाटल-पटलवृतालेरङ्गं श्यामं किमिति सचित्रम् ?
स्नेहे भवति सदैव हि चित्रम् ।

किमिति विप्रयोगे जलदः पातयति तप्ततरतैलम् ?
शीतलतमोऽप्यसौ सुधाकरः कुरुते ज्वलनचरित्रम् ?
स्नेहे भवति सदैव हि चित्रम् ।

'ललितललाम' प्रसूनपरागोऽनुमीयते मुर्मुरवत् ,
नालो व्यालेदृशोऽमृतं तप्तं हालाहल-मित्रम् !
स्नेहे भवति सदैव हि चित्रम् ।



१९३३

# शिशिरसमीरः

अयि सखि, शीतो वहति समीरः !
निमिषे कृशः श्वसिति शाखान्ते,
क्षणे दृश्यते वीरः !
अयि सखि, शीतो वहति समीरः !

ललितपल्लवाहित परिधानो
लसति सुरभिसहकारः
क्वचन कोकिलः कूजति कुञ्जे
क्वचनारण्यक — कीरः ।
अयि सखि, शीतो वहति समीरः !

क्वचन भृङ्गझङ्कारः क्वचन च
दोला-लीलाऽऽलीनाम्
स्मृतिमुद्बोधयति श्रुतिमधुरं
धीरन्धीरं धीरः !
अयि सखि, शीतो वहति समीरः !

सरसि पयसि, कानने निकुञ्जे
रूपं, रसस्सगन्धः
प्रावृषि नभ इव भूर्विभूषिता—
सुरभौ; भव, किमधीरः ?
अयि सखि, शीतो वहति समीरः !



१९३३

# कृष्णघनः

आलि घनो वनमाली !

चेतश्चलयति चञ्चलाचय—

श्चक्रसुदर्शनशाली !

आलि घनो वनमाली!

कादम्बिन्यक्षौहिणी-समा

सन्नद्धाऽस्ति समन्तात् ;

अतिसुधांशु नीलाम्बुजवदनं

किमिति मृगयते काली ?

आलि घनो वनमाली !

नृत्यति नीलकण्ठमण्डल

माखण्डलचापसमानम्

वृष्टि ध्वनिरध्वनि परिसर्पति

पान्थश्रवणे व्याली!

आलि घनो वनमाली !



१९३३

# उत्कलिका

गायक ! गायसि मधुगानं, वादयसे वेणुमदीनम्

कथयसि कथमयि ! मामपि लपितुं ललितराग-लय-हीनम् ?

कोमलकण्ठ ! कलालापस्ते भविता त्वरितम्पाप:

सोत्कलिक-श्रोतृणां स्वान्ते वृथा भविष्यति ताप: ।

प्रेरणयाऽलं सखे! कथञ्चन लपितुमस्म्यहन्नालम् ;

विद्वत्प्रवरसमाजे सम्प्रति कोमाम्पृच्छति बालम् ?

× × ×

किन्तु तवाज्ञोल्लङ्घ्यते ? तदा रोदिमि वा गायामि ;

आर्य्य ! विचार्य्यन्त्वया स्वयन्नैतत्किञ्चिज्जानामि ।

× × ×

'अहो ! साधु गायसि !' किङ्कथयस्युत्साहयितुम्मामयि !

करणीयैवङ्करुणाघन-मानसैरार्य्यमिश्रैर्मयि !!



# ममता

जननि ! जनय नो कुतुकम् ।

कण्टकिकण्टकमपि कथयसि निजमिति कमनीयकुरवकम् ?

स्वरं लयं तालं नहि जाने

मूर्च्छितोऽस्मि मूर्च्छना-विताने,

परम्प्रवृत्तस्सम्प्रति गाने ।

स्वशिशुरिति धिया वायसमपि मामिव लालयसि पिकम् !

जननि ! जनय नो कुतुकम् ।



मैगरा

विजयादशमी

सं० १९९१

# सपत्नरत्नम्प्रति

मदिर-चपल-जीवने
        ताटस्थ्यं दर्शयसे प्रस्तर,
        रङ्क, विभव-भुवने ?

संस्पृश्यापि कण्टकं पवनश्चुम्बति पाटल-पटलम्
अलि-मलिनं वर्तते प्रसूनं तदपि न परिमल-विमलम् ?
गर्हणमियद्गृहीतं तव भवतो न भवेत्स्पृहणीयम् ?
लीनं पल्वलजलं गाङ्गमिव निस्तरङ्गरमणीयम् ।
कान्त-स्वान्त, चकास्ति चारुचन्द्रे लाञ्छनं न लक्ष्यम्
अपयशोऽपि शोभितं त्वदाप्तं प्राणपणैरपि रक्ष्यम्
गाम्भीर्य्येणापरसिन्धौ त्वन्मनसि स्थिर-संस्थानम्
हृदयमद्य मे गायति नूत्नं विश्वजनीनं गानम्
नूनं निहिताऽसंख्या, संख्यावन्ते स्वान्ते पीडा,
विज्ञातं वैदुष्यरहस्यं शब्दैः क्रियते क्रीडा !
मर्मव्रणे नखाघातो गुणिनो गौरवमय लीला
भङ्क्त्वा दृशावश्रुप्रश्नो, जगतीयं लीलाशीला !

पातनपरतोत्पतनसमर्थानां कीर्तिस्ते ख्याता
तण्डुलमेकं पचति सार्द्धमयि महामहानसपाता !
वक्रगतिप्रियता भुजगानां, विषरसवशदशनेन
दशनं न मर्मणि बत विदित त्वमसि हतो व्यसनेन !
काकोदरसोदर, रमणीयमणिस्तेऽनर्धतमोऽस्ति,
महादेव-लालित, विमृश्यतां बालकृष्णकःकोऽस्ति !
झञ्झावाते वाति न वैज्ञानिकविद्युन्निर्वाति
शब्दधुरीणा व्यर्थमतिस्तेऽभिनवभवे न विभाति !
पुंस्कोकिलकोलाहलतस्त्वं भीतो वायसगीतम्
आकर्ण्य, ते पुरोभागितागरलं मया निपीतम् !

स्वादु जलं, वट-विटपिच्छाया किं सुलभं न वने ?
लक्ष्याचलजीवने !

●

मैगरा

१९३३

# स्मारं स्मारम्

स्मारं स्मारम्,

देव ! पद्धतिं ते विलोक्य क्रन्दति हृदयं मे तारम् ।

तारुण्यस्य प्रथम-प्रभाते
विकसित-वदन-सजल-जलजाते
त्वय्यपि हृदयाङ्गणात् प्रयाते

दृग् गुम्फति मे मौक्तिक-हारम् ।

मतिः स्थिरा मे त्वय्यभिरामे
भ्राम्यति न वने नगरे ग्रामे
किं जयेन जीवन-संग्रामे

त्वां न लभे चेद्विगत-विकारम् !

अहमेकाकी लोकालोके
त्वामहं प्रतिपदं विलोके
त्वमेवासि मे हर्षे शोके

त्वामुत्सृज्य न गन्ता पारम् ।



१९३३

# रहस्यमयी—१

## (त्रिपाच्छन्दः)

जीवनं वनं कण्टक-कीर्णम्
तरणं जगतो मरणं जीर्णम्
सत्त्वन्ते द्वाभ्यामनिगीर्णम् !

गतलक्ष्म मृगाङ्कशतप्रमुखम्
अवलोकयत्स्वसुषमासु सुखम्
कमलादमलं ते मञ्जु मुखम् !

सत्वरं विद्युदिव मतिहरणम्
उन्मज्जत्प्राणपुलिन—शरणम्
नयनन्ते शिवशतसत्करणम् !

पीयूषसीकरस्यन्दि परम्
संस्फुरणैस्सुमनो — मनोहरम्
सुन्दरि, तव वितथाभिधमधरम् !

कुन्देन्दुखण्डमण्डलकषणम्
रमणीयं स्मितलहरीवसनम्
मन्दीकृतमुक्तं-ते दशनम् !

वरवेणुवल्लकीगुणरसनम्
आत्मन्यात्मनस्सरसलसनम्
आनन्दमयन्ते मृदुहसनम् !



# रहस्यमयी — २

जीवनं स्थितिर्मरणं गमनम् ,
जीवनमरणयोर्मधुरमिलनम्
त्वमसि प्रेयसि ! नवजगदयनम् ।

पुञ्जितमञ्जुलतमस्सदनम् ,
रुचिरं रोचिश्च तिमिरकदनम् ;
उभयाश्रितमेतत्ते वदनम् ।

सुषमामयि ! लयजीवनजयनम् ,
पीयूषगरलचञ्चलचयनम् ;
अमलिननलिनं तव नत-नयनम् ।

सानन्दवृन्दमनिशं विधुरम् ,
कामिनि! कषायितं, मधुमधुरम् ;
संसृत्यसमं सममिदमधरम् ।

तन्मयतोल्लासहासपचनम् ,
सततन्ध्वनिरणितकाव्यरचनम् ;
तव गीतिनीतिमयमयि! वचनम् !

अस्पृश्यरहस्यराशिलासिनि !
कोमलकलिकापरिमलहासिनि !!
प्राणायिताऽसि मानस-वासिनि !!!

●

नीरवशिशिरतमी
१६-२-३५

**ललितललामः**

# रहस्यमयी—१

## (त्रिपाच्छन्दः)

जीवनं वनं कण्टक-कीर्णम्
तरणं जगतो मरणं जीर्णम्
सत्त्वन्ते द्वाभ्यामनिगीर्णम् !

गतलक्ष्म मृगाङ्कशतप्रमुखम्
अवलोकयतस्त्वसुषमासु सुखम्
कमलादमलं ते मञ्जु मुखम् !

सत्वरं विद्युदिव मतिहरणम्
उन्मज्जत्प्राणपुलिन—शरणम्
नयनन्ते शिवशतसत्करणम् !

पीयूषसीकरस्यन्दि परम्
संस्फुरणैस्सुमनो — मनोहरम्
सुन्दरि, तव वितथाभिधमधरम् !

कुन्देन्दुखण्डमण्डलकषणम्
रमणीयं स्मितलहरीवसनम्
मन्दीकृतमुक्तं-ते दशनम् !

वरवेणुवल्लकीगुणरसनम्
आत्मन्यात्मनस्सरसलसनम्
आनन्दमयन्ते मृदुहसनम् !



# रहस्यमयी – २

जीवनं स्थितिर्मरणं गमनम् ,
जीवनमरणयोर्मधुरमिलनम्
त्वमसि प्रेयसि ! नवजगदयनम् ।

पुञ्चितमञ्जुलतमस्सदनम् ,
रुचिरं रोचिश्च तिमिरकदनम् ;
उभयाश्रितमेतत्ते वदनम् ।

सुषमामयि ! लयजीवनजयनम् ,
पीयूषगरलचञ्चलचयनम् ;
अमलिननलिनं तव नत-नयनम् ।

सानन्दवृन्दमनिशं विधुरम् ,
कामिनि! कषायितं, मधुमधुरम् ;
संसृत्यसमं सममिदमधरम् ।

तन्मयतोल्लासहासपचनम् ,
सततन्ध्वनिरणितकाव्यरचनम् ;
तव गीतिनीतिमयमयि! वचनम् !

अस्पृश्यरहस्यराशिलासिनि !
कोमलकलिकापरिमलहासिनि !!
प्राणायिताऽसि मानस-वासिनि !!!



नीरवशिशिरतमी — ललितललामः

१६-२-३५

# अनुरोधः

स्वेच्छया विचर मा मधुकर,
मीलित-दृक्कलिकापुञ्जे
चुम्ब न निर्दय संकुचितावयवे
तमोघने कुञ्जे

मन्दं मन्दं वहति सुगन्धोऽ
मृतमकरन्दो वातः
पश्यति मुहुर्मुहुर्वलाहकं
क्षिपन् विधुर्नवजातः

वेलायामेतस्यां खेला
भाति न ते श्रितकलुषा
कार्य्यं चपल विचार्य्य कार्य्य—
मयि यथा दह्यसे न रुषा

प्रथमं गुञ्ज वनालीम्परितो
हरिरिव वेणुं वादय
उन्मत्ता कलिका न भवति चेत्
कृष्णवदनमाच्छादय

प्रार्थयते हृदयेशो मधु—
लम्पट किं त्वराऽभिनन्द्या ?
कलिकाहृत्पाटच्चर तव
धृष्टताऽ शिष्टरस-वन्द्या !

●

# वीणावादिनि !

वीणावादिनि किन्ते वीणा—

लोकेनालोक्यते साम्प्रतं

ललितरागगुणहीना

धत्से यस्मिन् गुणे स्वाङ्गुलिम्

विच्छिद्यते स एव सन्ततम्

यमालपसि रागं विरज्यते

तमाकर्ण्य हृदयं स्वर-विततम्

कथमाकृतिर्दृश्यते दीना ?

वीणावादिनि किन्ते वीणा?

स्नेहगेहगानं गायसि

श्रुति-पेयं, सुमनोमनोमोहनम्

निर्गलितं गरलं ततः कथं

वने क्रन्दनं प्राणदोहनम्

व्यर्थं त्वमसि न भाव-विलीना?

वीणावादिनि किन्ते वीणा ?



'३१

# हर हे

हर हे हर मेऽखिलमभिशापम् !
शूलिन् शूलतले निपातय
द्रुतमुच्छृङ्खलपापम् !

त्वं निवससि शिशिरे हिमालये
गङ्गां बद्ध्वा कुन्तलालये
निर्विष-नागं कुवलयवलये
शिशिरय मे धूम्रान्तस्तापम् !

मौलौ शिशु-सदृशं सुधाकरम्
वहसि मुदा लोचनसुखाकरम्
चन्दनलेपं हृदि व्यथाहरम्
आकर्णय मे करुणालापम् !

तूष्णीं स्थितं कवोष्णमस्तकं
दृग्द्वयं स्रवत्यविरलमुदकम्
वितथिमितं जीवनमनूनकम्
कुरु सफलं सबलं निष्पापम् !



’३२

# कामना

कर्तुं विलासं नाशपरिणामं
न राज्यं कामये
स्युर्विद्रुता रिपवो यथा
शौर्यं न प्राज्यं कामये
ह्लीणा भवेयुर्वालिशाः
अतिधीरतां नो कामये
समताऽस्तु मा वारांनिधे—
गम्भीरतां नो कामये
सुषमामदृष्टां क्वचन काञ्चन—
वल्लरीं न हि कामये
भास्करनिभां प्रतिभा-प्रभां
श्रेयस्करीं न हि कामये
सम्मानमम्लानं यशोऽश्यानं
न वामं कामये
हृदयेश, जीवनदर्शनन्तेऽहं
प्रकामं कामये ।



# अन्वेषणम्

न जाने नाथ चिन्तामणिवर
त्वं क्वासि दिग्वलये !
नभसि किंवा सरसि किंवा
मनसि वा कल्पना-निलये?
अये मृगये न कुत्राहं
घने गहने वने विजने
अजन्मन् जन्म यदि लेभे
विनष्टः किं पुनः प्रलये ?
शरदि वर्षासु हेमन्ते
वसन्ते ग्रीष्म-शिशिरादौ
अटन् नष्टो नटन् भ्रष्टः
क्वचिद्रन्ध्रं न ते कलये !
विलोचनमाकुलं द्रष्टुं
मनो व्यग्रं नवं स्त्रष्टुम्
शयेऽहं संश्रवे हृदयेश
किं जागर्षि निर्विलये ?



'३२

# परिचयः

दयनीयानां खिन्नचेतसां

स्विन्नध्वनिरपरोऽहम्

जठरज्वालदग्धधिषणानां

शीतोच्छ्वासभरोऽहम्

परस्सहस्राश्शरदस्तप्त्वा

तप उपलब्धं तेजः ;

दृश्ये यथा तथा न गुप्त—

वैश्वानरशिशिरकरोऽहम् !

त्वमिव नास्मि किमनल्पजल्पने—

नाद्य, वदिष्यति कालः ;

मोमुदीति दृष्ट्वा में सृष्टिं

द्रष्टा, कल्पचरोऽहम् ।

× × ×

स्नेहाशाप्रदीपिते प्रदीपे भावमग्नमना

दूरादागत्य विनिपत्य हुतोऽनङ्गोऽहम्

अज्ञानान्धतमस गहन तर्कभृद्गगने

बोधप्रतिभाभास्वरसंपतत्पतङ्गोऽहम्

वारिदं सवारिवरं नभसि विलोक्य भृशं

नृत्यनिरत बर्हिणचरणचारु-स्वङ्गोऽहम्

कूपवापीसरितां कथाभिरल

मवगाह्यः सागरो गभीरः किन्तु तरलतरङ्गोऽहम्



२

# अन्तर्द्वन्द्वम्

वक्ति मानसं स्वोद्‌गारस्या—

न्तर्निगूहनं कुर्य्याम्

वदसि परं त्वं स्वीयकथां

कथयेयं पुर्य्यां पुर्य्याम् !

त्वमचूचुरस्स्वान्तमेकान्ते

गोपायितुं क्व यास्यसि ?

दग्ध्वा मे हृदयागारं

क्वान्यत्र नु शरणं प्राप्स्यसि ?

चलितः पिको विहाय निकुञ्जं,

क्वास्ति प्रत्यभिज्ञानम् ?

क्व निवत्स्यति भाविन उद्‌गाता ?

कः कर्ता सन्धानम् ?

को निवारयेद् गच्छद्‌गानं

कः प्रतीपयेद् धाराम्

वैज्ञानिकगद्‌याञ्चितगगनं

जनयिष्यति नवताराम् ।



'३३

# जीवनदानम्

किमिति न गन्तव्यं? किमत्र ?
तिमिरस्य नमस्या प्रसृतिः ।
सुधियामपि संकीर्णता चित्ते
व्योमनिभा मे प्रकृतिः ।
कियत्पिनद्धः स्यां मञ्जूषायां
विद्युत्तरकरणः ?
कुण्ठितो न चाग्रे प्रवर्द्धने
दीप्तात्माऽनुपकरणः ।
पश्य दृश्यते नभसि सभं
चित्रं चिरत्नमिव वस्तु
हस्तस्सदा प्रशस्तो मे
तदवाप्तौ स्रस्तोन्वस्तु ?
आलस्यवतोऽयं पन्थाः
पतितो भुवि सुरपुरलोभी
आकण्ठं कुण्ठायां मग्नः
कल्पितसुकृतसुशोभी !
अद्यावधि रममाणस्तमसि
महात्मा कियद्विशङ्कः
सतन्द्रेण दोषैकदर्शिना
चन्द्रेऽलोकि कलङ्कः ।
भुवनं भवति वीक्ष्य जीवनदं
वृन्दावनमिव कृष्णाम्
जीवनदाने तदपि न जाने
किं मे मनः सतृष्णाम् ।



# नर्तयसे लोकम्

जीवनेऽनेकवारं किं

प्राणैर्दर्शनमधुपीतम् ?

किन्तदपि हृदयमदयं मे

प्रिय, तदनुरूपतां नीतम् !

भ्रान्त्याऽऽगच्छो मन्निलयं

प्रिय, सकृदपि न स्नेहेन,

**विधिना केनास्मि कृतोऽहं**

**विमना प्रतनुर्देहेन!**

त्वमपश्यो मां जनगहने

मददृष्टदृशोः कोणेन

तदभावि निःस्वविश्वाक्ष्णा

परभृत इव किं शोणेन ?

अच्युत, मां च्योतयितुं किं

कल्पितोत्तुङ्गतरशिखरात्

प्रैरय आरोढुं शैलं?

स्फुटमुदकं प्रस्तर-निकरात् !

हसिते रोदनमतिघोरं

गोपायसि लसिते शोकम् ,

आत्मारामश्शान्ताकृति

रनिशं नर्तयसे लोकम् !



'३४

# प्रलापः

सुषमाशालिनी कदाचन
सन्ततं विगत-विच्छित्तिः
हिमहता पद्मिनीवेयं
सुमनः सुमनोहरवृत्तिः
किं जयपराजयौ गणयति
चित्संशयदोलारूढा ?
किं कृताकृते चेतयते
मूढा मतिरन्तर्गूढा !
मृगयते सुधाकर-किरणे
निर्वित्तं चित्तं गरलम्
वक्रं सशक्रमनुमन्यत
ऐश्वर्य्यं स्वर्गं सरलम् !
शासितुं जगत्सोच्छ्वासं
ज्वलनस्योर्द्ध्वस्फुरणं किम् ?
केनाप्यवधारितमग्रेऽ
नूपे जलदक्षरणं किम् ?
सरसिजकिञ्जल्क-पिशङ्गा
रविभा न निदाघे नन्द्या ?
हरिणी हिरण्यवर्णा यदि
दैन्याघनाशिनी वन्द्या !



# गीतस्वरः

श्रोष्याम्येव न किञ्चिद् यद्
रोचते कदापि न मह्यम्
कथय, सुखाय चेतसस्ते स्याद्
दुःखं कियन्नु सह्यम् !
नाद्यावध्यभवत्पूर्णा
जीवने सदाशैव कृता
मुक्तास्वाशासु निबद्धा
हा हन्त! मदाशाऽपहृता !
किमिति चिन्तनीयं किञ्चि
च्चेन्न बुधैरप्यालोच्यम् !
नवं चिन्तनं प्राचां दृशि
चेदुच्छृङ्खलं न शोच्यम् !

× × ×

सुखमनुभवः कस्य दुःखस्या—
द्यावधि सकृन्न विदितः ।
कोलाहल-कम्पित-गगने
शान्तो गीतस्वर उदितः ।

●

# श्रमिककन्यका

श्रमिककन्यकाऽसमये भीता !

भूमिपतिर्न हि लोकरावणो

भूमिकन्यका नेयं सीता !

भूमिपतिर्न जरा वशंवदः

प्रावृषि त्वमसि समदड्रम्मदः

जाग्रज्जृम्भतरौ नदन्नदः

श्रमिककन्यका मा परिणीता !

विक्रेतुं नोद्यतः पिता ते

प्रतीक्षते कानने चिता ते

क्व गमिष्यसि सदनं नयिता ते

भूपतिना त्वं नभसि न नीता !

श्रमिक-कन्यका वितथं भीता !!



# काकली

कोकिल! कृत: कलालापो नन्दने त्वया सानन्दम् ;
तत्प्रतिध्वनि: प्रेङ्खितोऽधुना दिशि दिशि मन्दं मन्दम् ।
वायसेदृशेनापि वन्यपक्षिणा चेद्वनेऽनुकृत:
अनुभूतो न कथम्भवेद् धृदा मेऽपि स सततम्प्रसृत:
यो यस्यानुकरोति विभ्रमन्तस्मात्स्वयं स हीन:
त्वद्वाचोऽनुकृतेर्मलिना 'काकली', नतोऽयं दीन: ।
माधुरी न साऽस्त्यत्र मसृणता मोहकता नालापे;
अभिशापे च वरे भेदो ऽयं कले च काकविलापे ?
**कुत्र नन्दनं वनम्प्राप्नुयां नरलोकेऽत्र सशोके ?**
सति पुरन्दरेऽपि न पुरन्दरं श्रोतारञ्च विलोके ।
तत्र वसत्युल्लासकस्सदा सुरभिरनादिरनन्त:,
जीवनवने न मे कदाचिदायातो हन्त ! वसन्त: ।
निरुल्लासहृदये में भावा विलयं यान्त्यायान्ति;
क्वचिदपिनाद्यावधि लब्धा चिरवाञ्छिता हृदा शान्ति: ।
आसीन्मे सुप्तो मनोरथो विपथे पतितोऽस्खलित:
अकस्माच्छुतो वायसेदृशस्याद्य खलवो ललित: ।
कलवल्लकीगुणा इवासवश्शवतां गता इमेऽद्य,
झङ्कृतास्समृच्छ्वाससमीरैस्स्पृष्टा इव मे सद्य: ।
स्वरकम्पनन्तत्क्षणं जातं, श्रुतिमण्डलमिव तन्मे ;
अहरहो रहो विरहो जातो, मनसो मेऽपि, च मन्मे ।
तदा न विज्ञाताऽऽकुलमनसा वाग्वक्रोक्तिविनम्रा,
प्रलपितैव सा कथ्यतेऽधुना मया काकली कम्रा ।
सुधास्यन्दिवचसस्ते संस्मृतिमाधास्यति लोकेऽस्मिन्
काक-काकलीयं क्षम्या, ध्येया करुणा स्वजनेऽस्मिन् ।

२८-४-३४

●

# आशा

पिधायाक्षिणी स्वच्छशोचिषी, सततं वर्द्धितपीडे
विगलिताभिलाषोऽपि निवत्स्याम्यद्य न निविडे नीडे ।
सुखमस्वाप्सं जीवनमात्रं, मतिरपि निद्रामग्ना,
अविश्वास्य ! समदं चलता चरणेन तवासौ भग्ना ।
वञ्चनचञ्चो ! चलति न चरणश्चेत् किं तव सोऽप्यचलत् ?
पङ्गुं कृत्वा साङ्घ्रियुगलमपि मां, निर्दय ! किंन्वमिलत् ?
संगोप्यैव सकलशक्तिं मे, निजसंस्थापितभक्तिः,
धिग्विधाय पाखण्डं, सफला क्वचिद्भवत्यनुरक्तिः ?
मुखमपि किं न निबद्धं? 'किन्तु वदन् स्याः क्वचिदपि दृष्टः !'
धिग्, दूषणशतमण्डितोऽपि पण्डितः कथ्यते 'शिष्टः' !

× × ×

अन्तरितोऽहं किं विभाव्य लोकेनामत्सरिणाऽस्थिर ?
किमदृश्यं ? द्रक्ष्याम्येवाद्याध्वा ज्ञातोऽरिरवेण ।
श्यामलं वनन्दृश्यते पुरो लोकचित्तमिव नूनम् ;
क्वचिदत्रैव मम प्रियोऽपि गोपितो, येन हृद्दूनम्
मन्ये 'मनोरथः कस्यापि न पूर्णोऽभवदद्यावधि'
मानवमनस्तदा कथं स्थिरं भवति 'सकामं', 'सावधि' ?
वञ्चनमेवैतत्, परं जगत् ! त्वच्छलना विज्ञाता,
मिलनाशां दयितस्य मनो मे नैतत्परं विहाता !

नीरवः

४-२-३५



# निशीथवीथ्याम्

नीरवे जगति जागर्त्तीयं काऽपि कामिनी कृष्णा,
सततम्प्रेम्णा हृदये निहिता मनुजस्य तडित्तृष्णा।
श्वाससमीरे धीरध्वनिमिममाकर्णय लज्जायाः,
असफलमनोरथस्य विश्वविश्रुतवासकसज्जायाः ।
स्तृतस्तरङ्गोऽपाङ्गप्राङ्गणे मतेश्शतच्छिद्रायाः
भवति च संशयालुजगतः सम्प्रति न लवो निद्रायाः ।
लोचनवातायनसंश्रितवदना व्रीडान्तःक्रीडा
सुप्ते ह्यद्यपि किं जागर्त्ति विलुलिताशस्य नु पीडा ?
स्वपिति नित्यमेतज्जगत्कदाचित् स्वप्स्यति चानुपमम् ,
जागरूकहृदयेन चीयतां किमिति पुनर्मृत्कुसुमम् ,
उपकृतिकृतयोऽकृतिनः कर्णे किं कुर्वन्तु न करुणाम्?
स्वार्थश्यामां मतिमाकुरुते पुण्यप्रणयोऽप्यरुणाम् ।
जानन्नपि 'चपला लक्ष्मीः' क्वचिदचलच्चललुण्ठाकः ;
फलमपि पापानां स्मरन् जनो तल्लीनोऽस्ति वराकः ।
योगवियोगौ नित्यौ चेदलमलमेतच्छोकेन,
चेन्निश्चितो वियोगोऽस्मादलमेतददयलोकेन ।

'३४

# जीवनसङ्गी

जीवनमेतन्ममाभविष्यत्
जगति निरर्थमपूर्णम्
त्वं प्रिय, मिलितश्चेदभविष्यो
नाजननादतितूर्णम् ।
प्राणवल्लकी श्वासगुणै—
राकम्पिताऽप्यरसिता स्यात्
त्वत्कोमलाङ्गुल्यसंस्पृष्टा
किं झङ्कृतिं विदध्यात् ?
कथमहमुद्भवितुं समुत्सुकं
नवपल्लवं निरुन्ध्याम् !
कुसुमाकरं जगत्कर्तुं विकलं
चेतः, किं कुर्य्याम् ?
जीवनलता नता संकल्पैः
कथमुन्नमयेयन्ताम् ?
प्रसृतिमन्तरा किं संसृत्या ?
सेवेऽहं किं कान्ताम् !
कमवलम्ब्य वा वाति नु वाते
प्रतिकूलेऽपि दृढः स्याम् !
जनारण्यविस्मृतहरिणः
पीडायाः सुपरिवृढ स्याम् ?
त्वद्गिरमृतेऽमृतेनेष-
त्स्पृष्टामपि न गिरं शृणुयाम्
त्वद्दत्तं सुखमन्तरा न
सुखकुसुमावलिमपि चिनुयाम्
उपालभेय नु कं ? कस्य च —
पुरतो हसेयमिह लोके
पापमसुं किं दधे नु पुण्य-
श्लोकेऽवाप्ते शोके ?

× × ×

सदा सहैव वसन्नपि नाद्या-
वधि दृष्टः सहगामिन् !
किन्तु करोषि सदेप्सितमेव,
न वेत्सि किमन्तर्यामिन् !

’३४

●

# प्रभात-सौन्दर्य्यम्

उदयति मिहिरो विदलति तिमिरो
भुवनं कथमभिरामम् !
प्रचरति चतुरो मधुकरनिकरो
गुञ्जति कथमविरामम् !!

विकसति कमलं विलसति सलिलं
पवनो वहति सलीलम् !
दिशि दिशि धावति कूजति नृत्यति
खगकुलमतिशयलोलम् !

शिरसि तरूणां रविकिरणानां
खेलति रुचिररुणाभा !
उपरिदलानां हिमकणिकानां
काऽपि हृदयहरशोभा !!

प्रसरति गगने हरिहरभवने
दुन्दुभि-दमदम-नादः !
भज परमेशं पठ सनिवेशं
भवतादनुपममोद : !!



# ''परिचयः''

कुत्रागच्छेयं ? किंन्वाहूयेऽहमनारतमग्रे?
न मनो रमते जीर्णजगत्यस्मिन्, नाशा प्रत्यग्रे।
कुत्र न तमसस्साम्राज्यं? निन्द्येते किं मे नयने?
स्खलितं किं हास्यं? त्रास्यं शूलादि न कस्मिन् अयने?
नाद्य गद्यते व्यथाकथा, किन्त्वमसि नु सुखी प्रमाता?
तव मौग्ध्यस्यापि न किम्पीडा हृदि मे सम्प्रति जाता?
पन्थानन्दर्शयिष्यसे जीवनयात्राया लोके?
किन्तु न दर्शनमात्रमप्यहं हृदयोत्साहं लोके।
किं नु भविष्यति पूर्णं मनो? ग्रहीष्ये किं वरदानम् ?
जाने देव, न देयं वस्तु समीपे तेऽप्यसमानम् ।
कृत्वा लुण्ठनमकारणं कस्यापि, कियन्मे दास्यसि;
न भृतो भवितास्म्यहन्तेन, किन्त्वमपि मोदतां यास्यसि?
एवमेव कुर्वन् सततं देवस्त्वमहन्ते दासः?
त्रोटितस्तदा देवाद्यैव मया स दासतापाशः।
नाभिमानलेशो मयि, संशीतिरुदेति न ते सत्त्वे;
अद्यापि तथैवास्ति घृणा करुणा वा जगतस्सत्त्वे।
वर्त्ते नाहं कश्चिदन्यमानवो युगे विकलेऽस्मिन् ;
किन्तु परिचयो जातो, ज्ञाते धेया दयाचलेऽस्मिन्।

नीरव यामिनी
१२-२-३५

**'ललितललाम'**

●

# कविताकल्लोलिनी

अहमस्मि ललितकिरणो नवः।

प्रकृतिसुन्दरीसरसविश्वजनमोहनमानसरागः,

सहृदयहृदयविहारिपारिजातस्रक्पूतपरागः।

कुमुदकौमुदीविहितपरिभवः,

अहमस्मि ललितकिरणो नवः।

मुदिरो नियमितनियतिर्ज्वलितावनिहितकृतप्रतिबिम्बः;

दीप्तदीपको विस्नेहस्स्तृतदरप्रकाशनिकुरम्बः।

पवननिहितनिर्वाणताजवः;

अहमस्मि ललितकिरणो नवः।

मञ्जुलमरालसुकुमारसारतानिदानमेकोऽस्मि शुभ्ररश्मिः;

वृन्दितमिलिन्दवन्दितसुगन्धितारविन्देन्दिरामन्दिरमस्मि।

त्वरितविकसितसरोजिनीधवः;

अहमस्मि ललितकिरणो नवः।

वितततारकापटलहर्षक ≻ कृशकर्षककुलदैन्यदर्शकः;

परप्रतापतिमिरालिधर्षकस्स्नेहधवलधाराभिवर्षकः।

प्रेमिकाहृदयरागिणीलवः;

अहमस्मि ललिलकिरणो नवः।

उषोमोहिनीललाटतटसिन्दूरबिन्दुरतिमङ्गलच्छविः;

नयनसुन्दरोदयगिरेर्महारुणमयूखनिकरोऽस्मि जितरविः।

मुदितविहङ्गमविहितसंस्तवः;

अहमस्मि ललितकिरणो नवः।

शरद्रजतराकानिशीथविद्योतमानमानससुधीमतः;

कवितालतासु विस्फुटित आशु कमनीयपल्लवो लोलताङ्गतः।

वेदैर्विबोधितः प्रशस्तप्रणवः;

अहमस्मि ललितकिरणो नवः।

चन्द्रचारुतरचन्द्रिकाचलाचलविलोचनचकोरसोदरः;
वर्द्धमानभवदावपावकविनीलनीरदतनोर्मनोहरः।
विरहविकलकलवल्लकीरवः;
अहमस्मि ललितकिरणो नवः।

सूक्तिसूतिभारतीभूतिभरकमलाविमलालापः;
जिष्णुविष्णुलासो महेशहासो विधातुरभिशापः।
भूयोऽभयभवेऽभवो भवः;
अहमस्मि ललितकिरणो नवः।

आयासितमृगराजिराजविरुदावलिवद्धननागः;
पिहितमञ्जुमणितरलगरलधरतमस्तोमसमनागः।
सदाऽऽहूतरिपुराहुराहवः;
अहमस्मि ललितकिरणो नवः।

छन्दोऽलङ्कारप्रपञ्चवञ्चितोध्वनिकलङ्करहितोऽपि तोयभः;
अभिनवस्य कविकोविदस्य कृतिनोहृदोऽस्मि मुकुरश्शुभप्रभः।
निजलीलयैव जीवितविरसशवः;
अहमस्मि ललितकिरणो नवः।



# पीयूषलहरी

कृष्णोति कलय करुणया कर्णकमनीयम्;
अयि, विनयि--पदेनैतेन मनश्शमनीयम् ।
लोलेन लोचनेनाहं लोके लोकम्,
शोकेन केन सङ्क्रान्तो लोकं लोकम् ।
मतिहतिर्धृतिक्षतिरभूद्रहोऽहरहो मे,
आनन्दसन्ततेरहो, नित्यविरहो मे।।
दीनेश, दीप्तदयया दुःखन्दमनीयम्;
अयि, विनयि--पदेनैतेन मनश्शमनीयम्।
निधनोत्का विनैव वित्तमधीरा धीराः;
विलसन्ति हसन्ति धनेनाधीरा धीराः।
निर्विण्णा हन्त वसन्ति दिगन्ते वीराः;
काका लाल्यन्ते हन्यन्ते कलकीराः।।
क्वचिदस्तिगतिर्मे कथय कुत्र गमनीयम् ?
अयि, विनयि--पदेनैतेन मनश्शमनीयम् ।
पूजापरायणा वीतसूनवो जाताः;
सात्मजैर्नास्तिकैस्सेव्यन्ते वनवाताः।
कृतिपद्धतयस्ते सन्तु कथं विज्ञाताः;
हतधिया ह्रिया धृतयोऽपि गोपितास्तास्ताः।
भूयो भूदेवैः पदं न ते नमनीयम्
अयि, विनयि--पदेनैतेन मनश्शमनीयम् ।

नन्दने मन्दमन्दं नन्दसि सवसन्ते;

जीवामि जगति जगदीशोच्छवसन् वसन्ते।

सुखसूतिभूतिभूषितो भवसि भोः कान्तः;

केनोपायेनापायेनाहं क्रान्तः।।

उद्दामकामरुचिराम, न तद्रमणीयम् ;

अयि, विनयि--पदेनैतेन मनश्शमनीयम् ।



# प्रलापः

उच्छ्वसन्ति  किमु जीवनाद्यकाञ्चनकलकालेऽत्राणाः;
भुक्तोज्झितमायिकविषया इव विषयजये मे प्राणाः ?
वसुवासनां विहाय विभो, गच्छन्ति सघनवनसङ्गे ?
विदधति लोभमशोभन्त्वरितञ्जलनिधितरलतरङ्गे ?
कीदृगिदङ्गगनङ्क्रियच्च गुरु, दृश्यते कथं सान्द्रम् ?
कुत्र नु हाराकारास्तारा, लोके चन्द्रमतन्द्रम् ?
किमु वहन्ति सद्यो नद्यो विस्तारितधारास्तारम् ;
भावयन्नपि न भावयामि तत्तद्वैषयिकं सारम् ?
ग्रीष्मो वर्षाश्शरच्छिशिरहेमन्तास्तथा वसन्तः;
ऋतवः कुत आयान्ति, यान्ति किमु? दृश्यन्ते न वसन्तः ?
कलिकेयं मुकुलिता कदाचिल्लुलिता लुब्धभ्रमरैः—
पथि पतिता, कथिता कियती वागस्माभिस्स्मयनिकरैः ?
ह्योऽहमभूवम्भुवनमितो, मितमाचक्षे क्षणशान्तः ?
कीदृग् जगदिदमयि, साम्प्रतमेवाहमस्मि सम्भ्रान्तः ?
श्वो भविता भूयः किं? जाने नैव दैवत, गते मे?
मोच्य श्शोच्यत्वङ्गतोऽधुना भूभावोऽय'न्ते मे'।
स्थास्याम्येव न ते भुवने, भुवनेश सुन्दरे भीष्मे;
विधास्यामि वसतिं वनेऽथवा ज्वलज्ज्वलनवद्ग्रीष्मे।
आहूतोऽस्मि साम्प्रतं रिङ्गदुदन्वत्तुङ्गतरङ्गैः;
तत्कक्षङ्गच्छामि मोचितस्ताम्यदनङ्गासङ्गैः।
मद्रञ्जनचञ्चो, त्वयाकृतं सममपि नभोऽभिधानम् ;
पूर्णन्तत्, नो शून्यमद्य लोकिष्येऽभून्मे भानम्।

कोऽपि नाकलोको विहितो लोको नागस्य च कश्चित् ;
ज्ञास्याम्येव समस्तमद्य यद्यपि नैवास्मि विपश्चित् ?
शेषे किं शेषे जलधौ मृगये, किञ्चिन्न करिष्ये;
किमु विभेषि भो लोकमेहि पश्याद्य कियदयं शिश्ये
स्वच्छहृदय! विच्छायताङ्गतम्प्रच्छन्नत्वमिदन्ते;
लालायितो लोकितुं सम्प्रति पश्य, परेश पदन्ते।



# कलिके

कृतसार्थाभिधवसुधाङ्के मृदि दधती सदाऽमरीत्वम् ;
मालाकारनिभालितलतिकादृप्ता परिमलेऽसि का--त्वम् ?
मञ्जुनिकुञ्जेऽस्मिन्, गुञ्जद्भृङ्गाङ्गानङ्गितकाया;
किमसि महीयसि, परब्रह्मणो मनोमोहिनी माया?
शिशुहृदये निहूय सहृदयहृदयभावानविभावा,
अनुभूयात्मनि रहसि, हससि गोपितनवरसानुभावा?
दधदयि, यज्ज्योतिश्च्योतितरसधानकौशलं सविता—
चषति रसं, सरसा प्रसरति सा ते परिमलकलकविता!
दिशि दिशि किरन् लोकलोभनीय कवितामकरन्दम् ;
वाति समीरोऽधीरामोदो मोदान्मन्दं मन्दम् ।
वरवृन्ते नृत्यन्ती, नतलतिकानन्दञ्जनयन्ती;
मुनिमानसेऽपि मोहनभावं सततन्ततन्नयन्ती।
चुम्बस्युच्छ्वासैर्न विलासैस्ततस्स्थिराऽपि रसाऽभूत्;
त्वमसि तेन नन्दनेदृशी सम्प्रति कुञ्जस्य दशाऽभूत् !
गन्धमृगीव निजाङ्गसुगन्धौ भ्रान्ता किं वनबाले!
पश्यसि मुहुर्मुहुस्तिर्यग्वलिताक्षी यन्निजजाले?
किमीक्षसे, काभ्यान्दृग्भ्यान्दृश्यसे जनैर्महनीया?
क्षन्तव्या, साम्प्रतमशेषदेशीयदशा दयनीया!
किम्पश्यसि, पश्यति किं लोकोऽलिम्पार्श्वस्थं क्षोभात् ?
कमलदलन्त्वाञ्जाने तञ्जलममलमहं स्थमलोभात् !
देवि, विलोके ते रूपे दैवतललनालावण्यम्
सततञ्चमत्करोति सचेतश्चेतो, मामपि वन्यम् ।

सुन्दरसौन्दर्यधृतौ लोके प्रकृतेः कृतेर्विकासम् ;
हासं वनदेव्याः, वन्द्यं वृन्दारकवृन्दविलासम् !
कुसुमवाटिकानाटिके त्वदङ्के प्रेक्षे गुरुगन्धम् ;
लघुभारो भवितास्मि, धेहि कृपया मे गौरवगन्धम् ।



# विरहः

मिलननाटकस्यान्तिमाङ्कं, जीवनजीवन, वितरसि किम् ?
अहह, शोकनिवहन्द्रुततरमेतम्मन्दं विहरसि किम् ?
काककलापैस्सह मधुरालापं कुर्वञ्जीवेयम् ?
कण्टकिन: प्रतिबिम्बं निम्बं वा सेवेय तथेयम् ?
उच्छ्वासौस्सममसुसमीरमुत्सरायेयमपि, नो किम् ?
अनुयामं यामिन्या लघयेयन्तनुमतनुतनो किम् ?
निद्रामपि न लभेय, न तन्द्राश्चन्द्राननमपि नो किम् ?
आजीवनमेवं श्वसेयमयि, दयित, दया ते नो किम् ?
ग्रीष्मो वसतु सदोद्याने ध्यानेऽपि नैतु स वसन्त:?
वर्षास्सततं सन्तु नयनयोरलयस्ते विलपन्त:?
मीनं विना मनोहरतां वा व्रजत्वदयितां सलिलम् ?
मीनोऽयन्दीनो, विना जलं जीवति किं श्रितलीलम् ?
नभसि गता: केचन मे प्राणा: प्राणाधिकमीक्षितुमयि!
सखे, सखेदं वच्मि लोचनन्तस्य न किञ्चित्सदयि।
किन्न पतङ्ग: प्राप्स्यति पुनरपि दीपकमसुदीपकमयि?
किन्न चातकस्सजलजलदपटलं श्यामं रूपञ्चयि?
चञ्चूपुटन्न चञ्चलयिष्यति चिरञ्चकोर × पुनरपि?
नीलकण्ठमण्डलन्न नर्तिष्यति हा, तत्केनाशपि?
मिलनप्राग्भावस्त्वम्मिलनावसानस्य च शवस्त्वम् ।
चिरञ्जीव मे विरह रहस्सम्प्रति मह्यं न नवस्त्वम् ।

× × ×

समं सहिष्ये, त्वमपि तथा कुरु रोचते यदा यत्ते;
त्वामुन्मूलयितुम्मे दयित × प्रच्छन्नोऽपि न यतते।



# गीतम्

नयने, नयने

प्रिये, पश्य मेऽवश्यमेव सम्प्रति नयने नयने;
कीदृक्सुखं, हन्त मिलितम्मे कण्टकमयशयने
मोदाश्रुमिश्रिते नयने; अयि नयने मे नयने।
सुखदुःखाभ्यामेव वृतोऽसारोऽयं संसारः;
क्वचिन्मिलति विजयो मया तु सततं लब्धो हारः
जयहारमयोऽयं संसारो, विनतन्ते किं वदनम् ?
सुन्दरि, सुषमासदनम् !
वहतिनदीयम्मन्थरम्प्रियेऽयम्पथिकोऽरसरसनः,
लसति स वस्त्रवेष्टितश्शीते विलपति निर्वसनः
तरुप्रतिबिम्बेऽयमनशनः।
चित्तञ्चमत्करोति तड़िद्वर्षतिजलधरोऽपि कुहचित्
हसति मानवः क्कचिदपि, रोदिति कश्चिदचारु विपश्चित्
प्रसीदत्यसौ प्रासादस्सीदति मेऽपि न सदनम् ;
जीर्णं छन्नच्छदनम् ।
सुखरूपिणि, दुःखेन मे कदाचिद्दुःखी संसारः;
सुखदुःखाम्बुधिरयम्महाविस्तारो दुस्तारः
एहि मिलेवानन्तान्ते त्वमहं, सम्भ्रम न ह्रिया;
अयि सुखमयि, मेऽसि प्रिया।
किं शमस्साम्प्रतम्वने? द्वार-मुक्त-पुरो देवि, लोकय नौ, नवेऽयने।
नयने, नयने।



# गीतम्

मधुरं मधुरम् ;
रूपं सौन्दर्य्यं लावण्यन्ते मधुरं मधुरम् ।
प्रिये, पश्य वरवचनविरचनाज्जितमधुमकरन्दम् ;
पतति तेऽधरे पीयूषं सततं मन्दं मन्दम् ।
अयि वितरदमरताम्पिबताम् ।
सहृदयहृदये, हृदये ते तिष्ठति मम समोऽनुराग:
पश्य दृश्यतेऽसौ तवाधरे प्रतिबिम्बितराग:।
अनुधरमीदृशमधरङ्क्रियदिति? तत्सङ्क्ष्येयत्येषा;
लोललोचने, लोक्यतेऽधरे ते किमशेषा रेखा?
चलितं कलितदृशो न भवेच्चञ्चलं सचेतश्चेत:;
दशनसमूहस्तत्कृतो नु किं विधिना वसनसमेत:?
अयि दयिते, सुदशनवसने!
सौदामनीवानुकादम्बिनि सचमत्कृति सुखसदनम्;
उपकमनीय कुन्तलावलिललितन्ते सद्वदनम् ।
सत्यमेव-सुन्दरं शिवं तत्सकलकलाकलितम् ;
चित्रश्चित्रकृतो न चित्रयितुमपि चित्तश्चेच्चलितम् ?
तव देवि, दिव्यमाननम् ।
आदिशक्तिरनुरक्तिराशिरासक्तिसन्ततिर्भक्ति:;
सर्वाप्यसि तेनैव मेऽधुना त्वय्येवास्ति प्रसक्ति:।
तनुषे ! नलिनं मलिनम् ;
स्वदृशाऽऽशया समं मनोरथम्मे कुरुषे ! वलिनम् ।
जीवनं जयत्यनुधरम् ;
देवि तवैव, लसत्स्वयं मनोमधुरं मधुमधुरम् ।
मधुरं मधुरम् ।



# गोविन्द-गानम्

कुसुमास्तीर्णनिषण्णां सततविषण्णां विभाव्य राधान्ताम् ;
अनुगोविन्दमधीरन्धीरस्मितमाह गोपिका काचित्



निन्दति नन्दननन्दनहरिचन्दनसुमपीतपरागम् ।
विन्दति मन्दं मन्दममन्दमिलिन्देन्दीवररागम् ।।
साऽशरणा मलहरणम् !
अशरणशरण ! वष्टि ते मञ्जुलमङ्गलकरणञ्चरणम् ।
ह्योभूद्याऽमलपरिमलवलितललितपाटलकलकलिका?,
कलिकालेन नु, सम्प्रति साऽस्ति तदङ्गकण्टकावलिका।
कमलाकरकमलामोदितकमलाकरकमलं कमलम् —
विनोदयति न, परन्तु नितान्तं स्वान्तं क्लान्तं विकलम् ।
कुवलय-किसलयसुकुमारं नीहारहारहरधवलम् ।
शीतलतलन्तदङ्गं वीतबलं विमलं सकलम् ।
सङ्गे विजितानङ्गम् !
वाञ्छति लाञ्छनहीन ! पीनमयि ! मुदिरमोहनन्तेऽङ्गम् ।
कोकिलकललापेङ्गितनृत्यन्मञ्जुमञ्जरीपुञ्जम् ;
गुञ्जच्चञ्चुरचञ्चरीकसञ्चयसञ्चारितकुञ्जम् ।
सूक्ष्मनिरीक्षणलक्षितलक्षणमिवतत्क्षणमिव सोमम् ;
पश्यति हर्षाद्वर्षन्तं तरलं गरलं प्रतिलोमम् ।
बालकुरङ्गापाङ्गतरङ्गायासितशम्पाऽऽकम्पा;
सीदति पुण्ये वृन्दारण्ये सा क्रियतामनुकम्पा।
कामयते श्याम ! सुखम्
साशा सा सानन्द मिन्दिरामन्दिरचन्दिरमुखम् ।

(२)

कमलदलायतनयनं कृतरुचिचयनम्विलोक्य गोविन्दम् ,
रतिपतिवसत्यसोढां ललितनवोढामुवाच काचिदपि।



कोमलकिसलयकुसुमाकलितकदम्बकदम्बघनम् ;
कलकोकिलरवनीलकण्ठसरसस्वरभास्वरवनम् ।
अयि सचकितहरिणीनयने;
हरिणाङ्कोऽपि सशङ्कमुदेति नभसि, विचलसि कथमयने?
शरत्कलाधरशकलसुललितालिकरोचनरोचने;
भाववती भव भामिनि भूयो रोचनरुचिलोचने।
'कलकल—सकलकलाकलितं कोमलकालिन्दीकूलम् ;
मुग्धे, स्निग्धतरङ्गनिकरकरमार्जितमानममूलम् ।
अनुचातकचारुरवम् ;
कथयति हातुन्त्वरितन्त्वां निजमानसमानलवम् ।
बालवल्लवीशयकिसलयसंश्रितकरकमलमलन्तम् ।
रासविलासहासभासितवदनं मदनन्दमयन्तम् ।
वेणुरणनरससरसहरिणबर्हिणवृन्दैरपि कामम्—
काम्यमानमसमानमानमवमानय सखि मा श्यामम्।
नवनवनीतकपोललोललोचनलावण्यललामम् ;
कोमलकमलमुखीमनुचुम्बन्तं मदयन्तं कामम् ।
कज्जलमलिननलिननयनाहितललितनिजाधररागम् ,
हरिमवलोकय लोललोचने, श्यामासमानुरागम् ।
जनहृदयहारिवंशीवादनलालसानालसाङ्गम् ;
गोविन्दस्यामन्दविभम्परिभाति जितानङ्गम् ।
कलधौते सौरभ्यं स्यात्,
नवनवैरवयवैर्यदि ते सुन्दरि! तत्सङ्गतिं विदध्यात् ।

उत्कलिकाकुलकलितां ललितामालीं विलोक्य विश्रान्ताम् ।
काऽपि परमसुषमाधवमाधवमाहस्म सुन्दरी मन्दम् ।



कलहंसावलिवलितसलिललीलायितललिततडागम् ;
पश्यति साऽसदृशी सुदृशी नलिनीन्दिन्दिरदरागम् ।
सममपि सशममवन्तम्
ललिता ललिताकृतिकृतिनं कामयते हन्त ! भवन्तम् ।
जिघ्रति शीघ्रमशीघ्रोच्छ्वासैस्सममसमेषु प्रसूनम् ।
शान्तिभ्रान्त्युदभ्रान्ताङ्गं किन्त्वधिकमाधिभिर्दूनम् ।
चन्द्रस्तन्द्रासान्द्रं कुरुते हृदयं त्वद्दृश्यायाः
वक्ति शक्तिभिर्यद्यपि तम्प्रति मामबलामपि पायाः।
सदाऽदक्षिणो दक्षिणानिलश्शमनसखोऽनलजातः,
जातोऽनुभव तदश्रुमिश्रितस्सम्प्रति झञ्झावातः।
क्षीणाङ्गी साऽहरहः
शिव शिव कियत्सह्यतां भवतः पीताम्बर वरविरहः ?
नवनवपल्लववृन्ददर्शितामन्दहृदयशयरागम् ;
तरुमपि वीक्ष्य परीक्षतेऽद्य भवतस्तत्प्रणयत्यागम् ।
निजलावण्यतरङ्गसङ्गिभङ्गोभिरनङ्गितदेहा;
वारिधिवीचिरिवाद्य चञ्चला क्षणमपि नो शेते हा !
सम्प्रति खञ्जनलोचना सखीजनमपि खञ्जानीते।
दर्शनाशयाऽसौ जीवत्येतावति दिनेऽप्यतीते।
प्रेम करोतु न कृष्णम् ।
कृष्णा गच्छ विच्छायमीक्षतान्तन्मानसं सतृष्णम् ।



# अधिकालिन्दीकूलम्

कलकालिन्दीकमनीयकूल !
अयि मोहनमङ्गलमञ्जुमूल!!
लीलालोलविलोचनललितालिलितविलासविलोल !
सानन्दं मन्दं मन्दं प्रावृषि कृतसुन्दरदोल !!
श्रितसरसरासरसरचन!
रमणीरमणीयसुवचन!!
मुदिरमेदुराम्बरशम्बररिपुचिररुचिरुचिरशरीर!
कोमलकमलकलापकलितकलसलिलसलीलसमीर!!
अयि वेणुवलितवरवदन!
अङ्गानङ्गातपकदन!!
पेशलपावनपवनप्रसारितपरपरागवरराग!
विचलवीचिनिचयाञ्चलमकरनयनकवरीनवनाग!
अयि सुरभिस्यन्दिस्यन्दन!
चन्दनपरिमलनतनन्दन!!
गोपाङ्गनागोपनीयगतगौरवकेलिनिधान!
चारुचञ्चलाचञ्चलस्मितिस्तृतहरिकीर्तिनिदान!!
हृतकामकोमलश्याम!
अयि लोचनललितललाम!!

●

# वनीम्प्रति

कलितकिशोरकुसुमकुलसङ्कुलमञ्जुलवञ्जुलदले
निर्जनपदे वससि किं? वद, अयि मे प्रियसखि विमले !
लसितहरितनवपादपपुञ्जप्रसूनपरागावले !
सफले, सजलेऽनलेऽनिले कमले, प्रियसकलकले !!
काऽसि ? कथय, अयि हले !
सरससमीरसमीरितनवनवपल्लवपूतगले !
धीरकीरकिर्मीरितलतिकावलिबलिते चपले ।
लोकितकण्ठीरवसहकृतिविज्ञातहृदयतलवले !
'झर-झर' ध्वनिभरनिर्झरकैतव ततलावण्यजले !!
काऽसि? विपञ्चीकले !
विश्वविदितनिजहृत्प्रभावकृतप्रस्तरनिखिलाचले !
वीणेङ्गितनर्त्तनप्रवीणे ! विहितमयूरीच्छले !!
उत्कलिका मे भवति कुसुमिता लोकय पत्रतले !
ललितलतामोहनफलानुमितसरसमधुमधुरफले !!
कान्तकपोलस्थले !



# कल्लोलिनीम्प्रति

चन्द्रशेखरस्यास्य गिरीशस्यासि प्रिया सानन्दे !
पदद्वन्द्वमरविन्दमहन्ते मन्दं मन्दं वन्दे ।
गिरेस्तुङ्गशृङ्गादवतीर्णायास्ते गुणाः प्रियाः कति?
शङ्करजीवनसारभूत-पूते हे नूतनपार्वति !
कृष्णदतिकठिनादस्माज्जाता गौरी सुकुमारी,
द्योतः परितो हरितो राजति सहृदयहृदयविहारी ।
क्रीडति सलिलेऽमले सलीलं कमनीयाकृतिकरिणी;
मन्दं विहरत्युपपुलिनन्ते मनोहारिणी हरिणी ।
मृगमृगेन्द्रयोस्त्वज्जलपानात्पूतप्रीतिरादरिणी;
परिमलविमलशीतलाङ्गीयं जयति वने निर्झरिणी ।
वीचिनिचयचुम्बितचरणास्ते कुरवकबालतमालाः ;
मञ्जुलवञ्जुलकुटजलिकुचघनपनसपलाशरसालाः ।
लसन्त्येकतो मुकुलितवकुलकदम्बमालतीमालाः ;
गायन्त्यनुदिनमिह तीरे ते ललितविहङ्गमबालाः ।
आलि ! ललितललितं शृणोमि मधुकरमदमञ्जुलगुञ्जम् ;
चलविलोचनो लोकेऽनिशमभिरामतामरसपुञ्जम् ।
चम्पकचन्दनचारु चपलपाटलदलनीलनिकुञ्जम् ;
सरससैकते ते सुकुमारि! विलोल-बालतृणकुञ्जम् ।
चञ्चलकिरणा अरुणदिनमणेस्त्वयि नृत्यन्त्यभिरामाः ;
पद्मरागमणिजटितपटविभाः धत्से ललितललामाः ।
कलकलरवेण पुण्येऽरण्ये कान्तकथाः कथयसि काः ?
यतश्चञ्चलास्तरवस्सौम्यसमीरसमीरितलतिकाः ।
गौरवरं शीतलं सलीलं सलिलसारमयि ! तेऽङ्गम् ;
किमुपगिरीशमनङ्गवदिव ननु धत्ते तरलतरङ्गम् ?
चेन्नु निर्मिता पितामहेनेयं मृदुता निर्मलता ;
तद् रसवति ! दत्तैव कथं हा! हृदयतापिनी जड़ता ?

उन्नतं कुलं पतिरतिसुभगोऽङ्गं शीतलञ्च मृदुलम् ;
कलहासिनि ! किं निर्जनविपिने तपोऽनुतिष्ठस्यतुलम् ?
जातोच्चैश्शिरसस्सती वनं स्प्रष्टुमिच्छुकन्दहसि,
कथय कथय किं कारणमेवमकारणमयि ! किं वहसि ?
कुटिलां कुलजे ते विलोक्य गतिमद्रिरभूत्पाषाणः ;
गगनं शून्यं, मृद्धरा, जगत्प्राणोऽभूद्गतप्राणः ।
अयि सुषमामयि! त्वद्धासो ज्ञातं केनापि न मूल्यम् ;
तत्परिहृत्य वनं प्रयासि किं विज्ञातुं निजतुल्यम् ?
सत्युन्नतमस्तका दिवं द्रुतमभियातुञ्चेदर्हसि;
स्वैरं स्वैरं स्वैरिणि ! विपथे कथं कथन्तद्वहसि ?
केन कथय, ताडितहृदयाऽभूरेवन्त्वमिह विरक्ता;
भिन्नस्वान्ता कान्तारे कान्ते ! केनासि विभक्ता ?
अधरणिजा गिरिजे ! रघुवंशेऽनूडा, विस्मृतलङ्का ;
केन प्रेषितैकाकिन्यधुना रघुपतिना, का शङ्का ?
वल्मीकावलिरहं वने न वाल्मीकेश्श्रुतमभिधानम् ;
कुशलवमध्ये ! मध्येविपिनं कस्त्रास्यत इह मानम् ?
भीमभूमिभृत्कन्ये समसृष्टेस्सुषमान्दमयन्ती ;
त्यक्ता केन नलेन कथङ्कारं विपिने दमयन्ती ?
नववारणबालया प्रियंवदया,ऽनसूयया यासि,
कण्ठीरवकन्ययाऽऽलितां, सत्यं किं शकुन्तलाऽसि ?
यस्य मनो न विशुद्धं, किमु तत्सघनगहनश्रयणेन ।।
किमुपदिशसि चलचरिते ! विपिनाद्बहिश्चरणकरणेन ?
श्लाघनीयचरिते ! चेद्गच्छसि रत्नाकरन्तदेहि ;
सफलश्रमा सपत्निजाह्नवी प्राप्ता चेत्पथि, वेहि ।
'रत्नाकरे' ति नाम केवलं मकरनिकररत्नत्वम् ;
कुरु मा भ्रममभिधाने जाने तत्र विफलयत्नत्वम् ।
तत्सङ्गमेन मधुमधुरं ते सलिलं भविता क्षारम्;
फलं सहृदयैस्सदा विचार्य्यं कार्य्यं कारं कारम् ।

दूरतमे देशे स्थितोऽस्तिजडधिर्जडधीरेकान्ते;
मृदुचरणेऽशरणेव गमिष्यसि न श्रान्ता नगकान्ते?
देवि! तरलधारा हारावलिललिता रुपमदूषणम् ;
नैसर्गिककान्तौ ग्राम्येव कथं कामयसे भूषणम् ?
यदि समर्थयन्ती पुनर्जनिं पूर्व्वं पतिं नदीशम् —
कामयसे? मितमिति वदामि, 'गच्छ स्वेच्छयाऽस्तु ते शम् !



# षड् दोषाः

प्रलयो न भवेन्न भवे पुनरुद्भवेन्मानवः कश्चित् ;
'निद्रा' चेन्न भवेन्न भवेत्कश्चिन्मूर्खो न विपश्चित् ।
त्वरिततरं विकिरेत्तरणिर्धरणौ सम-किरणसमूहम् ;
'तन्द्रा' चेन्न भवेन्न भवे किं पश्यसि परप्रत्यूहम् ?
अपचीयेत न महिमा परमेश्वरस्यापि किं कामम् ;
'भयं' भवेच्चेन्न भवेत्किं नानर्थवृन्दमविरामम् ?
निर्मीयेत नवस्वर्गो नो, सीता स्याच्छ्रितलङ्का;
'क्रोधो' न भवेन्न भवेदुद्धारो धरणेः, का शङ्का ?
लक्ष्मीस्स्याच्चेटीव नटीव भवेद्दीर्दें हतनिष्ठे ;
'आलस्यं' न भवेन्न भवेच्छेषो धरान्धरन् पृष्ठे ।
किं सृज्येत सुन्दरी कविता विश्वजनीनसुभावा;
'दीर्घसूत्रिता' न भवेन्न भवेत्प्राज्ञत्वा स्थिरभावा ।



# रुदितम्

रोदिषि किं? शृणुते कः क्रन्दनमिदं सकरुणं जगति ?
निर्दयतमा मनुजजातिस्सङ्गीतवल्लभा भवति ।
विपदि धैर्यदातारं सम्पद्युपदेशकं न लोके ;
अनवद्यं निगदन्न कोऽपि कोलाहलमयेऽपि लोके ।
अधमाश्शोकप्रदास्सन्ततं स्वच्छन्दं विहरन्ति ;
हन्त ! सुधीमन्तस्सुखं धरायाम्पदमपि न धरन्ति ।
चालयन्ति च महान्तश्चाटूक्त्यैव शिरो नगतुल्यम् ;
सखे ! सखेदं वेद्मि संसृतौ किन्त्वद्रोदनमूल्यम् ।
देशदशामुद्दिश्य हि प्रयुक्ता व्यवहारा युक्ताः ;
अलमलङ्करिष्यन्ति किं जगद्-धृदयं लोचनमुक्ताः ?
स्वान्तस्सन्तोषाय सन्ततं यद्यपि रुदितं ललितम् ;
लोकयितुं लीलां लोकस्य तथाप्येतद्व्याकलितम् ।



# गीतम्

सदयं सदयम् , —

प्रिये ! जगति वर्त्तस्व सन्ततं समेऽसमे सदयम् ।

काननचारिवृन्दमयि ! सदयम् ;

गगनविहारिपुञ्जमपि सदयम् ,

सदयं श्रितसलिलं सर्वं, गर्विणि ! कुरु करणं सदयम् ।

वर्षति जलधरावलिस्सदयम् ;

धरति धरा जीवालीस्सदयम् ,

सदयं धत्ते धराधरो धरणिं धर धियमिह सदयम् ।

वाति समीरस्सततं सदयम् ;

वहति तटिन्यास्सलिलं सदयम् ,

सफलं तरुवृन्दं सदयं, भव भवे भूतिभृत् ! सदयम् ।



# विहङ्गमबाला

भ्राम्यन्ती ते रूपवने मे प्रीतिविहङ्गमबाला
गता, तत्र बभ्राम, हन्त! कुर्यां किमहं वनमाला ?
भ्रुकुटिलताशीतले तले ते मञ्जुल-लोचन-नीडे
त्वत्कुन्तलकोमलकिसलयनिकुरम्बवीतरविपीडे ।
श्रान्तेवाशु विवेशासौ कुर्यां किमहं वनबाला ?
अपरिचिते बभ्राम वने, मे प्रीतिविहङ्गमबाला !

× × × × ×

धीरं धीरं वच्मि मुखेऽहं खगबाले ! त्वन्धन्या ;
अन्यवने भ्रान्ताऽसि कथय सखि ! नासीः किन्त्वं वन्या ?
आशाऽऽशाविस्फारितनयना शयनागारे स्वीये;
पर्य्यङ्काङ्के हन्त! निषण्णा ध्यानं मुखे त्वदीये ।
पुनर्मिलेद्द्रष्टुञ्चेत्तद्विपिनं प्रकृतेर्यन्नु मतम् ;
त्वामन्विष्य तदाऽहं कुर्य्यामपि वदनन्ते विनतम् ।
पाण्डुरम्मुखं निखिलाङ्गं हा! क्षीणप्रायं जातम् ;
किं कुर्यां क्व वनन्तद्रूपन्ते सम्प्रति नावाप्तम् ।
अन्यवने भ्रान्ताऽसि कथय सखि! नासीः किन्त्वं वन्या?
धीरं धीरं वच्मि मुखेऽहं खगबाले त्वन्धन्या ।



# दीनो मीनः

तव नवलावण्याम्बुधिसलिले लवलीलया विलीनः ;
दोलाकालविलोलापाङ्गश्चचञ्चललोचनमीनः ।
कियत्कालमुत्प्लवनं कृत्वा रागसागरे दीनः ,
मग्नो, मन्दं मन्दं पीत्वा तद्रसमभूच्च पीनः ।
रक्तं सान्द्रपदं विहरन्तं तं लब्धुन्तत्कालम् ,
निजकेतनोपयुक्तमनङ्गो विस्तारितवान् जालम् ।
वद्धो हन्त! स एष साम्प्रतन्निर्गन्तुं हा! नालम् ;
विक्रेतुं गच्छति तद्दयिता धृत्वेन्दीवरनालम् —
वामेऽवामे करे तद्युतं पत्रनिर्मितं पात्रम् ,
वदति "गृहाण स्पृहणीयं नवमीनं काञ्चनगात्रम् ,
पश्यन्त्वत्र भवन्तो रचनापाटवं च वैधात्रम्"
हासं हासं वदति च मूल्यं 'सदयहृदयहृन्मात्रम्'।
दयित! विधाय दयामयि! मयि कश्चिद्विषयो नो शोच्यः
द्विगुणितमपि मूल्यं दत्वा दीनो मीनो मे मोच्यः ।
दोलाकालविलोलापाङ्गो मञ्जुललोचनमीनः
तव नवलावण्याम्बुधिसलिले लव लीलया विलीनः।



# दीपक

अनिलान्दोलितशिख दीपक, दीपयसि तमोमयभुवनम् ;
ज्योतिस्त्वं किं ब्रह्मणोऽसि दर्शयसि मनो, मोहघनम् ।
स्नेहपूर्णदेहोऽपि ज्वलसि ज्वलयसि प्रेमिपतङ्गम् ;
कथयसि किं स्नेहस्स्वयं ज्वलत्यपि दाहयति पराङ्गम् ।
प्रदर्श्याथवा वाह्यस्नेहं पुनराकृष्य पतङ्गम् —
ज्वलयसि 'रामनाम' वद्ने, पार्श्वे च करोष्यसिसङ्गम् ।
अन्योपकृतावथवा ज्वलयसि, प्रिय मे, स्वीयशरीरम् ;
पन्थानं पूतं प्रदर्श्य निर्वासि नु धीरं धीरम् ।
अथवोपदिशसि जगदेवं क्षणमिव विभाति निर्वाति।
सतां मुखं सुखदुःखयोस्ततस्सततं सममवभाति।
वर्त्तिक्रयाऽसि कयापि वर्द्धितस्तेन भासयसि लोकम् ;
उत्साहितो हितैषिभिर्नवः कविरिव प्रतिभाऽऽलोकम् ।
भ्रान्तिकृतैरपि पापैर्लोको याति विनाशं लोके;
भ्रान्तिनाशितपतङ्गो निर्वासि त्वं ततो, विलोके ।

× × ×

कृत्कार्योऽस्याहार्य्यनिश्चय चेद् यासि पुनस्स्वच्छन्दम् -
याह्यायाम्यहमपि ज्वलञ्ज्वालयंश्च मन्दं मन्दम् ।



# जागरणम्

संजागर्मि विनिद्रो हततन्द्रोऽहं भूत्वेव हरः;
किमभूत्तदा, लोकशोक ! त्वम्मे निद्राञ्चेदहरः।
मोहसागरे हतमतिलोको हरिरिव शेतेऽहरहः ;
किमभूत्तरिरिव तस्यौन्निद्र्यं व्यदधान्मे प्रियविरहः ?
लोकमानसं किं जानीते ब्रह्ममयं समवस्तु ?
किमभूद्यदि हृदयं हृदयेशमयं मे केवलमस्तु?
तिष्ठति लोकमानसं चपलं क्वचिदपि चिरं न प्रकृतेः,
किमभूद् -यदि हृदयं मयाऽर्पितं सम्प्रति दयितस्य कृते?
वीक्ष्य वीक्षणे मेऽरुणेऽद्य ते किमपि वदन्ति हसन्ति;
किमभूत् -प्रियं प्रेक्षितुं हृद्रागा मेऽक्ष्णोर्निवसन्ति?
स्वप्नदशामागत्य पश्य ते हन्त जीवनं ध्नन्ति;
किमभूत् -प्रियं मृगयमाणाः प्राणा मे सदोच्छ्वसन्ति?
सुखदुःखे विस्मृत्य तदात्मा वृथा विमुग्धश्शेते;
किमभूद् -दुःखैर्मे, विबोधिता जगत्पदार्थास्ते ते?
अद्य निद्रया ते वशीकृताः श्वो भवितारस्त्ववशाः
किमभूदुन्निद्रस्य मे चिरन्तिष्ठेदियमेव दशा?
अर्द्धसमयमवलोकयन्ति ते जगतः कमपि विकारम् ;
किमभूदौन्निद्रये संसारस्याजानं समसारम् ?

× × ×

निद्रातन्द्रामदमोहा मे समेऽप्यमी प्रिय, पिहिताः ;
किमभून्न तदा, चेत्त्वया हृदो मे जागराऽपि विहिता?



# सन्ध्या

अनुदिनं वर्द्धते संसारस्योपरि चेत्परिरोषः;
किम्भवति न भूयो हृदये तम्परित्यज्य सन्तोषः?
वसुधामृत्तिकां विधायान्तर्हितां स्थितान् प्रासादान् ;
प्रत्यहम्प्रेक्ष्य जाने किं मद्विप्रयोगसविषादान् ?
विहगा विलोक्य मां किमिमे किञ्चिद् गायन्ति रुदन्ति;
संस्मार्य्य भविष्यद्वाणीमध्वनि कस्यापि नुदन्ति?
गीतान्येतानि तरूणामप्यन्तस्तलन्तुदन्ति?
व्याजेन पतितपत्राणां मुञ्चन्त्यश्रूणि, रुदन्ति।
प्रत्यहम्प्रतीचीमङ्के सा सन्ध्या सन्ध्यायति किम् ;
श्यामलं वसाना वासो मृत्योर्गीतं गायति किम् ?
अयि पश्य, विकीर्णस्तस्यास्सञ्चितो मनोरथरागः ;.
गतगुञ्जनहृदयविपञ्च्या उत्थितो विलीनो रागः।
पश्याशु, तदाशाऽपूर्णा सह तमसाऽशासु विभक्ता ;
मानवाः किमेवं जगतस्साप्रतं स्यात्र विरक्ताः?
विरुतानि विहगबालानां हृन्मोहनानि कान्तानि;
मत्क्रन्दनैस्समं सम्प्रति विज्ञायन्ते शान्तानि।
मीलन्नयनयोर्विलोके प्रतिबिम्बं संसारस्य;
आयाति रुद्ध-कण्ठात्किं वार्त्ता तस्यासारस्य?
प्रचलन्ति पथा ते केचित् ? गच्छन् मानव सम्प्रति शृणु;
हतनिश्श्वासो, गतमोहत्वस्याद्यामरं वरं वृणु।

●

# मृत्यु-गीतम्

कलं कलं प्रतिपदं श्रूयते किमिति साम्प्रतं ललित-रागिणी?
अनुभवामि शीतलं समीरम् ,
ज्योतिरुदयते धीरं धीरम्;
तीरं त्रयीगीतिमयमयि दृश्यते नयनमोहनमन्दाकिनी।
मनोनन्दनम्पश्य नन्दनम् ;
ससन्तानमयि सहरिचन्दनम् ,
पारिजातप्रतिबिम्बे नृत्यति मञ्जु-मेनका नव-सौदामनी।
कीदृगसारोऽयं संसारः ?
विजयो नास्ति, सन्ततं हारः,
आनन्दस्य दिनं न यत्र, शोकस्य दृश्यते श्यामयामिनी।
दिव्यशेमुषिश्श्वसिमि साम्प्रतम् ,
मनोऽचञ्चलम्पथि विनिश्चितम् ;
कलित-चन्दिरं ललित-मन्दिरं मन्दमन्दमयि! यामि भामिनि!



# भग्नावशेषः

इष्टिके ! किमिष्टं पश्यसि,? नश्यति जीवनं समेषाम् !
त्वमिव त्वन्निर्मातृणामपि सैव दशाऽभूत्तेषाम् !!
किं मिलसि मृत्तिकायान्त्वं गत्या जितशम्पाकम्पा!
मृदि मिलितास्त्वन्निर्मातारस्त्वयि वर्द्धितानुकम्पाः!!
प्रस्तर, पश्यसि किं सारं? संसारान्मा विमना भूः!
प्रस्तरीविहितनिजहृदयैर्विगतैस्तैः कृता 'रसा' भूः !!
भित्ते दीर्यसे कियन्ति त्वयि जीवनानि जीर्णानि!
हृदयानि गच्छतान्तेषामयि तुभ्यमेव दीर्णानि!!
कौशिक ! लोकस्यास्य त्वं नव-कौशिकोऽसि, कुरु शब्दम् !
झङ्कृताः पुरा वीणानामत्रैव गुणाः कियदब्दम् !!
निस्सरताधुना समीक्षाकर्त्तुर्नो शोकोच्छ्वासाः!
स्नेहोद्गारामोदैरपि वासिता प्राग् यदावासाः!!
भग्नावशेष, किम्पश्यसि पुष्करं हन्त तच्छून्यम् !
उज्ज्वलिताक्षरैर्विलिखितं हृदि चरितन्ते भूपुण्यम् !!
उद्भ्रान्तपथिक पश्यैहि त्वज्जगतो जीर्णं गेहम् !
मूर्च्छितं जीवनं, शून्यामाशां, मृतमीप्सितदेहम् !!

●

# लघुता

भूपतितपावनी गङ्गाऽनङ्गार्युत्तमाङ्गवासा।
किम्वहेत् भूतले पतिता लघुता नोचेद् गुरुलासा।।
आधेहि जगन्निजहृदये यास्यति तत्तदैव लघुताम् ।
हृदयङ्गमं समं कुरु रे वाञ्छसि कर्त्तुं यल्लघुताम् ।।
दूरस्थो यावल्लोको लोकादपि दूरस्थस्त्वम् ।
मृणमयस्य जगतस्तावद् दृश्यते तथैव गुरुत्वम् ।।
दूरत्वादेवाज्ञायीदं नभश्शून्यमपि पूर्णम् ।
अप्राप्तत्वाच्च नृपत्वे धीयते गौरवन्तूर्णम् ।।
अतएवालब्धपदं यत्तत्तन्निगद्यते गुरुवत् ।
उद्योगादात्मकृतं लघु सर्वं पुराऽभवद्गुरु यत् ।।
इन्द्रस्यापि किं निजत्वे किञ्चिद्वर्त्तते गुरुत्वम् ;
अल्पाद्दूरीकरणे किंनु गुरोरप्यस्ति गुरुत्वम् ?



# व्यथाकथा

अद्य न नयने वारि हारितं हृदयन्तस्यागारे;
विहरति मतिर्न चलचन्द्रिकेऽम्बरे चारुणि सुकुमारे।
उच्छ्वासच्छायायामाशाभग्नमन्दिरे मन्दम् ;
क्रीडन्ती पीडाभिस्सह जीवाम्यधुना सानन्दम् ।
मलयानिलचञ्चलरजनी श्यामाञ्चलतलेऽमलेऽहम् ;
प्राणक्षीणशिखायाम्प्रेक्षे निज-निर्वाण-प्रकाशम् ।
एकान्ते शान्ते विपिनेऽस्मिन् वसतीयं वनबाला;
वनमाली पुनरेतिनोऽद्य शुष्का जीवनवनमाला।
किं कथयसि निर्दयतायाः प्रथयेयन्तथा प्रथां किम् ?
किं कथयसि कथयेयं वा मनसोऽहं व्यथाकथां किम् ?
अयि अनयायन नयन, नय न मामपि मञ्जुलमुपकूलम्
शोकाम्बुनिधे, र्विधेः प्रसादादाप्तम्मङ्गलमूलम् ।
किम्पश्यसि मां हतनियतिं बत हरिण विलोलविलोचन।
शान्तिविमोचन इह मां वामां वामाञ्जना अवोचन् ।
मल्लोचने विलोक्य विलोके लोकेऽशोकश्शोकम् ;
धत्ते बत तच्चाञ्चल्यं विकलयति सकलमपि लोकम् ।
स्थावरमपि जङ्गमयति, गमयति नमयति स्वान्तञ्च—लताम् ।
हन्त सन्तमपि चलयति कलयति मार्गे मनोऽपिचलताम् ।
सखे सखेदं पृच्छामि त्वां कथामिव मामुपयासि?
किम्पश्यसि मां निर्निमेषनयनो, मनोरथे कासि?

मानवी नवाऽहं वनवासिन् भ्रान्ता भ्रान्त नितान्तम् ;
कुन्दनिकुञ्जे मञ्जुमुकुन्दं मृगयेऽस्मिन्निजकान्तम् ।
पथ्यं कथयाम्यहञ्च तथ्यं, परमात्माऽसौ साक्षी;
स्वच्छहृदय माऽऽगच्छ, नास्मि मृगजातिरहन्तु मृगाक्षी।
गच्छ, गतोऽसि हतां विहाय मां -- हन्त हरे त्वं कासि?
चलितुं नो प्रभवामि यामि कुत्रेह कथं नायासि?
सततं विहितरतिश्श्यामे त्वयि रतिरिव कामे, बाला;
भवति नीरसोषोग्रथितेयम्वनमालिन् वनमाला।
कुञ्जकुञ्जरे कृतकरुणोऽरुणनयन कथन्नोदयसे?
शेषेऽशेषे जड़धिविशेषे शेषे किम्पुनरयसे ।
चन्द्रहतक किंवीक्ष्य विषण्णां षण्णाम्मध्ये हससि;
किं कुर्यां पुर्यां नो, गगने निर्मन्दाक्षो वससि।
जडधिजात जड किं विलोक्यते ते हृदयस्था जडता?
हालाहलसोदर स्वोदरे पिहिता हालाहलता।
हताभिधान सुधाकर, वमसि विषाकर विषं भृशं किम् ?
ग्राम्यदोषमिव काव्यम्मे, दोषाकर गुणस्पृशं किम् ?
कुमुद मुदं कुमुदाय ददासि, मुदा न; नामसारूप्यात् ;
अरविन्दं मन्दं मन्दं मुकुलयसि पाप वैरूप्यात् ।
अनलायसि किम्मलयानिल किल, किलकिञ्चितमवलोकय।
मन्दय मान्द्यम्मे मन्दार हृदम्मेऽशोकाशोकय।
वक्तुं नो पारये रयेन व्यथाकथान्न समग्राम् ;
संस्मार्य्य श्रीनिधे मया मा मां कुरु विफलं व्यग्राम् ।



# सुलोचना

मन्ये, धन्ये तदा सदाऽऽसीत्प्रीत्या वसन् वसन्तः।
गुञ्जन्तो मधुलिहसमन्तात्कोकिलाश्च विलसन्तः।।
बालरसालसालमालायाङ्कुसुमाली विकसन्ती।
मध्ये मञ्जुलवञ्जुलकुञ्जं वासन्ती विहसन्ती।।
दलदरविन्दं मन्दं मन्दं सामोदो मदधीरः।
मदयन्मुनिजनमनो ववौ मृदु मधुमयमलयसमीरः।।
उषोमञ्जुमदनः कदनस्तमसो लासितशतसदनः।
बालविभाकरविभुर्बभौ साचीकृतप्राचीवदनः।।
सरससुधां वसुधां विधाय वा नभसि यामिनीकान्तः।
बभौ सलीलसलिलकालिन्दीकूलेऽभ्रान्तश्शान्तः।।
विधिरुशनसा प्रशंसितं सितं श्रीवर्णननैपुण्यम् ।
श्रावं श्रावन्द्रष्टुमुत्सुकस्तादृग्रूपं पुण्यम् ।।
आज्ञापितवान् कालिदासमयि कवे धेहि मत्स्थानम् ।
उत्कृष्टं कुरुते नैपुण्यं बालं वाऽपि युवानम् ।।
लग्नो विधेर्विधाने जाने कलकालिन्दीपुलिने।
आसीनोऽदीनोज्ज्वलासने तत्क्षणे स तद्विपिने।।
एकान्ते कान्ते शान्तस्वान्तोऽरचयन्निर्गन्धिम् ।
ललनालोकललामामभिरामान्त्वां मन्दं मन्दम् ।।
त्वन्मुखलावण्यं विलोक्य, तादृग्लब्धुं स मृगाङ्कः।
रहसि नभसि हित्वा स भां गतश्चरितुन्तपस्सशङ्कः।।

ललितलोचनेऽलङ्कलयन्ती हरिणावली महीयसि—
घने वने चपलं पलायिता लज्जयाऽलि सुमहीयसि।
खञ्जनोऽपि खञ्जोऽभवत्तथावीक्ष्य विलोले ते ते।
इन्दीवरवृन्दं पङ्काङ्के विरससरसि हा शेते।।
आयते मते ते नयने धन्ये, मन्ये त्वं धन्या।
त्वां विलोक्य धन्यो वन्योऽहं, कवितालो मे धन्या।।



Sulochana, the queen of modern movie stars.

# सफलता

श्रान्तोऽस्मि न किन्तु न मृगयेऽहं क्वचिदपितेऽध्वानम्

शान्तोऽस्मि न किन्तु न याचे, चेतस्यपि ते मिलनम् ।

नोत्तिष्ठति लब्धुम्प्रसादमप्यसफलतरः करो मे ;

भृशमवलुलिते भवति न हृदये मनोरथोऽप्यपरो मे।

वर्षतो विलोचने दीनताचणेऽप्यद्य मृदुमुक्ताः;

परप्रतीक्षावसरे सङ्कल्पशतैर्भोगा भुक्ताः।

अद्य न मरुकण्ठान्निर्गच्छति सरसतमं ते नाम;

नागमनस्यावश्यकता ज्ञात्वा मां विवशं नाम।

देव परीक्षितमेव मया ते दीनबन्धुरभिधानम् ;

मैहि, रक्ष शिष्टं 'निर्दय' इति नाम नैजमनिदानम् ।



# लोचनोल्लङ्घनम्

अद्यावधि प्राप्तम्मया यत्तत्समीपे पादयोः,
अधिकन्न चेल्लब्धन्न किन्दोषोऽप्यसौ वाचक तयोः?
इत्थं विचार्य्य विसार्य्य आर्य्य कदाचिदपि नोऽहन्त्वया;
क्षन्तव्य एष जनोनिजश्चेत्किञ्चिदपराद्धम्मया।
शैशवे स्खलितैव वाणी भण्यते समबालकैः ;
सस्मितं सा श्रूयते तद्बान्धवैस्सुजनैर्न कैः?
दुष्टैस्तदाऽपि विहस्यतेऽपुष्टार्थभाषाभाषिणम् —
तम्प्रेक्ष्य, तच्चेष्टाकरम्मन्येऽधुनाऽपि तनुन्तृणम् ।
त्वम्मेऽसि वाचक तेऽस्म्यहन्निजकविधनंतत्ते धनम् ;
उपयुज्यतामधुनात्मवृत्ति विधाय भगवन्निजधनम् ।
सानन्दमधुनाऽनन्तमार्गेऽहङ्गमिष्याम्यश्रमात् ;
प्रेमाश्रु पाथेयङ्गृहीत्वा यामि ते नयनाश्रमात् ।
मन्त्रं स्वरेण मुखे जपन्मन्देन "वन्देमातरम्"।
यावत्समैर्विनिगद्यतामयि देव 'वन्देमातरम्'।।



# वाणीवन्दनम्

कलक्वणनकच्छपीरणनदत्तकर्णादरा—

दरोन्नतमुखी कलाकलितगीतिकागायने ।

विभाकरविभानिभाकृतिमणिस्फुरच्छाटिका

प्रभाभिनववाटिका जयति सा जगन्नाटिका ।।१।।

विलोचनविधूर्णनाद्विपुलविश्वसञ्चालिका,

विवेकनयननम्रतालतिसत्कलालालिका ।

स्फुरत्वनिशमेव मे मृदुलमालतीमालिका,

त्रिलोकपरिपालिका मनसि वेधसो बालिका ।।२।।

कुकर्ममकरावृते भुवनवारिधौ मज्जता—

न्दयाकृतनिजोदयाऽमलकुतूहलात्पारदा ।

समुल्लसतु मानसे मम विचारदाऽऽचारदा

स्वभक्तिरतिसारदा नयविशारदा शारदा ।।२।।

विधेहि विधिनन्दिनि! स्वरुचिकौमुदीनिन्दनी ;

सुखेन वचनावलीम्मम मुखे सुधास्यन्दिनीम् ।

कृपामयि ! कृपाकदम्बित-कटाक्षपातम्मुहु—

स्तवैव सगुणे! गुणावलिविलेखनीं लेखिनीम् ।।४।।

**।। इति ।।**

**।। शुभम् ।।**



*गुञ्जन्ती श्रुतिषु प्रसन्नमनसां गीर्वाणवाणीजुषाम्*
*सिञ्चन्ती सरसैः पदैस्सुललितैश्चेतोऽपि काव्यद्विषाम् ।*
*कर्षन्ती रसिकाञ्जनान्नवरसैः कान्ता नवोढा यथा*
*सद्यो मुक्तकमौक्तिकैर्विलसिता जीयाच्चिरं 'काकली' ।।*

*सस्ता ललितललामात् सहृदयहृदयेऽथ विन्यस्ता ।*
*स्नपयन्ती रसनीरैर्जयतु नवा काऽपि काकलीधारा ।।*

इत्याशंसते

[signature]

